# संस्कृत-साहित्य-कौमुदी

सा च संगृह्य
यथोचितं च परिवर्त्य
प्रकाशनार्थम् संपादिता

इन्द्रप्रस्थीय-विश्वविद्यालयस्थ-मुख्यसंस्कृताध्यापकेन
महामहोपाध्याय पण्डित लक्ष्मीधर शास्त्रिणा

*Published by*

VEDIC YANTRALAYA AJMER

*under the authority of the*

Board of High School and Intermediate Education,
Rajputana (including Ajmer-Merwara),
Central India and Gwalior, Ajmer.

1948.

# INTRODUCTION.

---

I have great pleasure in introducing this text-book in Sanskrit for beginners who intend to offer themselves as candidates for the High School Examination. The main feature of this book is that it is not a mere compilation of passages from larger works in Sanskrit, collected at random. It is a course of study, which follows a definite plan. And the plan is obvious. We all know that the chief value of the study of Sanskrit, to-day, is *cultural.* It is intended to offer within the short compass of this book, the outstanding ethical and spiritual values of life represented in Sanskrit literature, that have given shape to Indian civilization, so that a majority of students who forget every word of Sanskrit after they have left their schools, may still possess some ideas of the higher values of life achieved by the ancients; that may inspire them in their own life today ! I gave a considerable thought to the subject and it took me some time to decide as to what particular selections from a huge mass of Sanskrit literature, would suit the requirements of our students, in the present age.

Having made a list of selections from the original Sanskrit works, I discovered that it would not be possible for me to reprint them as they *are*

rapid course of study from less difficult to more difficult lessons.

I have also introduced certain other changes in printing the text. In order to make the text readily intelligible to the beginners I have in most places, taken liberty to put a hyphen between the various members of a *compound*, and did not care to observe strictly the rules of *Sandhi* in a sentence. I have made a free use of the marks of English punctuation—the comma and the semi-colon. It need not be mentioned that I have adopted these measures with a view to present the Sanskrit text to the beginner in such a manner, that his eye may readily catch the word in its typical form not yet distorted by the euphonic rules of combination. We all know that half the meaning of the Sanskrit text is brought home to the student's mind, at once; if the student is able to appreciate each word, in its isolated form, at its first sight; without any strain and effort on his part that give him much worry. It is a mistake to print Sanskrit texts for beginners without employing the necessary devices for an easy reading of the text. It is positively harmful for the students, to print the Sanskrit texts in a small type, so closely printed ! It is most discouraging for a student to read Sanskrit text badly printed on a paper of rough quality. The pages of a Sanskrit book must contain broad margins on all sides for special notes to be taken down by students. Let us provide all these external aids that go to help the proper

march from the *Hitopadeśa* and the *Panchtantra*. The *Jātakas* are followed by the verse of Válmíki which is at once simple and grand, a most suitable text in verse for a beginner. I take up, next, the stud of the episodes of the Mahábhàrata, which is so elevating ! As the students learn something of the two great epics of India, they cannot afford to neglect the study of the *Purāṇa* literature rich with some of the most valuable national legends of India. I therefore, take up some of the most inspiring legends of the Purānas, and present time in a manner that should be most pleasing to the students. Next, I turn to the dramas of Bhása and present them in a summary form, according to our special requirements. These simple dialogues, are bound to create in the minds of the students, a lively interest which will certainly be of great help in the growth of their knowledge of Sanskrit language. Having entered at the threshold of the *Kāvya* literature, I proceed to Kalidasa with his easiest poem the *Ritu Samhara,* make suitable changes in the text, and offer it for the aesthetic entertainment of our students. I also wish to give the students a foretaste of the classical Sanskrit prose. Thus I take the most instructive chapter of Bána's *Kādambari* made particularly easy, according to our required standard. I close up the book with the didactic poems of Bhartrihari. The students would be well-advised if they learnt by heart a collection of happy verses scattered throughout the book.

An attempt is made to make this small book fully representative of the cultural heritage of ancient India. To keep alive the general interest of the student in the book, variety in selections is maintained throughout by presenting passages of different character, such as narative, epic, dramatic, poetical, historical, religious and the didactic, etc. There is one big vein of high morality that runs throughout the various pieces and links them up in one common whole. This spiritual vein supplies the nation with its life-blood, It nourishes the "constant mind" of Humanity, May the students of Sanskrit who read this book have a rich supply of this life-blood of the nation. Thus invigorated, they may live a strong and healthy life of disinterested service, in and through the Society, which is the chief message of Sanskrit Literature of a high order, through distant ages.

LACHHMI DHAR,

*April 15, 1942.* *St. Stephen's College, Delhi.*

# संस्कृत-साहित्य-कौमुद्याम्

## विषयानुक्रमणिका

# संस्कृत-साहित्य-कौमुदी



[ The opening prayer in this book, as printed below, is drawn from various religious works in Sanskrit. It breathes a spirit of universal love and selfless service, that is the characteristic message of Sanskrit literature. ]

यस्मिन् सर्वम् यतः सर्वम्, यः सर्वम् सर्वतश्च यः ।
यश्च सर्वमयो नित्यः, तस्मै सर्वात्मने नमः ॥१॥

यदाज्ञया भाति दिवाकरोऽयम्,
यदाज्ञया भाति निशाकरश्च ।
यदाज्ञया सर्वमिदं विभाति,
तम्, एकदेवम्, शरणं व्रजामः ॥ २ ॥

तमीश्वराणां परमं महेश्वरम्,
तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्,
विदाम देवं भुवनेशमीड्यम् ॥ ३ ॥

पिताऽसि लोकस्य चराचरस्य,
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो,
लोकत्रयेऽप्यप्रतिम-प्रभाव ॥ ४ ॥

तस्मात् प्रणम्य प्रणिधाय कायम्,
प्रसादये त्वाम्, अहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः,
प्रियः प्रियायार्हसि देव ! सोढुम् ॥ ५ ॥

त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव,
त्वमेव सर्वं मम देवदेव ! ॥ ६ ॥

अभयं देहि देवेश ! पापाद् अस्मान् निवारय ।
वयं त्वां शरणं यामः, रक्ष नः शरणागतान् ॥७॥
भक्तिं देहि श्रुतं देहि, धर्मं देहि स्वतन्त्रताम् ।
देहि योगं च बुद्धिं च, जनानां हित-कारिणीम् ॥८॥

त्वहं कामये राज्यम्, न स्वर्गं नापुनर्भवम् ।
ामये दुःख-तप्तानाम्, प्राणिनाम् आर्ति-नाशनम् ॥९॥

नृणां शिवं चास्तु, तथा पशूनाम्,
स्वेषां शिवं चास्तु, तथा परेषाम् ।

आतङ्क-हीनं जगदस्तु सर्वम्,
दोषाः प्रणाशं सकलाः प्रयान्तु ॥ १० ॥

सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु ।
सर्वः कामान् अवाप्नोतु, सर्वः सर्वत्र नन्दतु ॥११॥

आब्रह्म-स्तम्बपर्यन्तं शुभं भूयात् सर्वजगताम् ।
कल्याणमस्तु । भद्रमस्तु । शान्तिरस्तु ॥
शान्तिः ! शान्तिः ! शान्तिः !

---

[ At the time of admission to the *'Gurukula'* in ancient India, the *'Brahmachārī'* was asked to take a vow in certain matters of conduct and the daily routine of life, that is known as the Vrata Śikshā. At the time of the dismissal service too, the teacher gave instruction how to live in this world. This lesson is adapted from the ancient texts that embodied the teaching. ]

## द्वितीयः पाठः ॥ २ ॥

( व्रत-शिक्षा )

[ आचार्योऽन्तेवासिनमनुशास्ति । ब्रह्मचारी बाढमिति प्रत्याह । ]
पुत्रक ! ब्रह्मचारी असि । कर्म कुरु ।
वाचं यच्छ । सत्यं वद । धर्मं चर ।

भूत्यै न प्रमदितव्यम् । यत्नान् न प्रमदितव्यम् । आचार्यस्याप्रतिकूलः स्याः । अदत्त-हरणं प्रतिषिद्धम् । मा गृधः कस्यचिद् धनम् । ऋणं मा कार्षीः । अक्षैर्मा दीव्याः । मा याचस्व कंचन । विषादं मा गाः । सर्वदा त्वया सोत्साहेन भवितव्यम् । कामं परिहर । क्रोधं लोभं मोहं मदं मात्सर्यं छलं कपटं च परिहर । आत्मवान् भव, पुत्रक । सर्वं कार्यं बुद्ध्या परीक्षेथाः । संस्कृतं सुपठ ॥

पूर्वोत्थायी स्याः । शौचमाचरेः । सायं प्रातः सन्ध्या-मुपासीथाः । मा गुरुभुञ्जीथाः । सामयिको भव ॥

मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । एष आदेशः ॥ यानि अस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि । यानि अनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि । एष उपदेशः ॥ उत्तिष्ठत, जाग्रत, प्राप्य वरान् निबोधत । एषा वेदोपनिषत् । कर्तव्यं हि मतं सर्वलोकहितम् । तस्मात्, स्थिरो भूत्वा, आत्मनः कार्यमपि विहाय परकार्यं कुरु । एतदनु-शासनम् । एवमेवैतदुपास्यम् ॥

In this lesson which is adapted from Madhusudan's Smriti, it is intended to give the student a general idea of the extensive character of Sanskrit literature. He may not be able to read all the Sanskrit books, in life. At least, he should know some important names of the various kinds of works extant in Sanskrit literature. ]

## तृतीयः पाठः ॥ ३ ॥

### ( वेदादिशास्त्राणाम् नाम-रूप-निरूपणम् )

वेद-शास्त्र-पुराणाद्यैः, स्मृति-न्यायादि-विस्तृतैः ।
अखण्डानन्द चिद्रूपः, परमात्मा निरूप्यते ॥

अथ वेदाः । धर्म-ब्रह्म-प्रतिपादकम्, प्रमाणवाक्यम्, वेदः । ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्वणवेदश्चेति वेदाश्चत्वारः । 'श्रुतिः' इत्यपरं नाम वेदस्य । शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषम्, इति वेदाङ्गानि षट् ॥

पुराण-न्याय-मीमांसा-धर्मशास्त्राणि चेति चत्वारि, उपाङ्गानि ॥

तत्र, सर्ग-प्रतिसर्ग-वंश-मन्वन्तर वंशानुचरितप्रतिपादकानि पुराणानि ॥

ब्रह्मपुराणं विष्णुपुराणं भागवतपुराणमित्यादीनि, अष्टादश पुराणानि ॥

उपपुराणानि चानेकप्रकारकाणि ॥

भूत्यै न प्रमदितव्यम् ।
आचार्यस्याप्रतिकूलः स्याः
मा गृधः कस्यचिद् ध
अक्षैर्मा दीव्याः ।
विषादं मा गाः । सर्वदा
कामं परिहर । क्रोधं लोभं
परिहर । आत्मवान् भव
परीक्षेथाः । संस्कृतं सुपठ
पूर्वोत्थायी स्याः । शं
मुपासीथाः । मा गुरुभु
मातृदेवो भव । पित
आदेशः ॥ यानि अस्माकं
नो इतराणि । यानि अनवद्य
इतराणि । एष उपदेशः ॥ उ
एषा वेदोपनिषत् । कर्त
स्थिरो भूत्वा, आत्मनः का
शासनम् । एवमेवैतदुपा

[ The Hitopadesa is the work of Nārāyana Pandit. It presents the stories of the Panchatantra in a revised from and in an easier style of composition. The student should try to imitate the style of writing in the Hitopadeṣa. In the Hitopadeśa, participles are more frequently used than the verbs. This is characteristic of the latest style of Sanskrit composition, and is so helpful to a beginner who attempts at writing in Sanskrit, without possessing a comprehensive knowledge of the conjugation of Sanskrit verbs. ]

## चतुर्थः पाठः ॥ ४ ॥

### ( हितोपदेशे—प्रस्ताविका )

श्रुतो हितोपदेशोऽयं, पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यम्, नीतिविद्यां ददाति च ॥१॥
अजरामरवत् प्राज्ञो, विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् ॥ २ ॥
विद्या ददाति विनयम्, विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति, धनाद् धर्मम्, ततः सुखम् ॥ ३ ॥
यन्नवे भाजने लग्नः, संस्कारो नान्यथा भवेत् ।
कथाच्छलेन, बालानां, नीतिस्तदिह कथ्यते ॥ ४ ॥

अस्ति भागीरथी-तीरे पाटलीपुत्र नामधेयं नगरम् । तत्र सर्व-स्वामिगुणोपेतः सुदर्शनो नाम नृपतिरासीत् । स भूपतिः, एकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव—

मनु-याज्ञवल्क्यप्रभृतिभिः कृतानि, वर्णाश्रमधर्मविशेषणं विभागेन प्रतिपादकानि धर्मशास्त्राणि ॥ 'स्मृतिः' इत्यपरं नाम धर्मशास्त्रस्य । वाल्मीकिकृतं रामायणमादिकाव्यम्, व्यासेन संपादितं महाभारतं चेतिहासत्वेन प्रसिद्धम् ॥ तद्-द्वयमपि धर्मशास्त्रान्तर्गतम् ॥

अथोपवेदाः । आयुर्वेदो, धनुर्वेदो, गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः ॥

तत्र चिकित्साशास्त्रमायुर्वेदः । रोगनिवृत्तिरूपं सुखसाधन-ज्ञानम्, अस्य प्रयोजनम् ।

युद्धशास्त्रं धनुर्वेदः । क्षत्रियाणां स्वधर्माचरणं युद्धम् । दुष्टदस्युचोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् ।

गीत-नृत्य वाद्यभेदेन बहुविधोऽर्थो गान्धर्ववेदः । देवताराधन-निर्विकल्प-समाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम् ।

अर्थशास्त्रं च बहुविधम् । नीतिशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति ।

अपि चानेकविधानि शास्त्राणि, नानामुनिभिः प्रणीतानि, लौकिकानि चाध्यात्मिकानि । तत् सर्वमन्विष्य परिशीलनीयम् ॥

काचः काञ्चनसंसर्गाद्, धत्ते मारकतीं द्युतिम्।
तथा सत्सान्निधानेन, मूर्खो याति प्रवीणताम्॥

उक्तं च—

हीयते हि मतिस्तात! हीनैः सह समागमात्।
समैश्च समतामेति, विशिष्टैश्च विशिष्टताम्॥

अत्रान्तरे विष्णुशर्मनामा महापण्डितः सकल-नीतिशास्त्र-तत्वज्ञो बृहस्पतिरिवा-ब्रवीत्। देव! महाकुल-संभूता एते राजपुत्राः। तन्मया नीतिं ग्राहयितुं शक्यन्ते।

नाद्रव्ये निहिता काचित्, क्रिया फलवती भवेत्।
न व्यापारशतेनापि, शुकवत् पाठ्यते बकः॥

अतोऽहं षण्मासाभ्यन्तरे, तव पुत्रान् नीतिशास्त्राभिज्ञान् करिष्यामि। राजा सविनयं पुनरुवाच—

कीटोऽपि सुमनः सङ्गाद्, आरोहति सतां शिरः।
अश्माऽपि याति देवत्वं, महद्भिः सुप्रतिष्ठितः॥

तद् एतेषां अस्मत्पुत्राणां, नीतिशास्त्रोपदेशाय, भवन्तः प्रमाणम्। इत्युक्त्वा, तस्य विष्णुशर्मणो, बहुमानपुरःसरम्, पुत्रान् समर्पितवान्।

अथ प्रासाद-पृष्ठे, सुखोपविष्टानां राजपुत्राणां पुरस्तात्, प्रस्तावक्रमेण, स पण्डितोऽब्रवीत्—

काव्य-शास्त्र-विनोदेन, कालो गच्छति धीमताम्।
व्यसनेन तु मूर्खाणां, निद्रया कलहेन वा॥

तद् भवतां विनोदाय, विचित्रां कथां कथयामि। राजपुत्रैरुक्तम्। आर्य! कथ्यताम्। विष्णुशर्मोवाच। शृणुत यूयम्॥

अनेक-संशयोच्छेदि, परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रम्, यस्य नास्त्यन्ध एव सः ॥

यौवनं, धनसम्पत्तिः, प्रभुत्वम्, अविवेकता ।
एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ॥

इत्याकर्ण्य, आत्मनः पुत्राणाम्, अनधिगतशास्त्राणाम्, नित्यम् उन्मार्गगामिनाम्, शास्त्रा-ननुष्ठानेन, उद्विग्नमनाः स राजा चिन्तयामास—

कोऽर्थः पुत्रेण जातेन, यो न विद्वान् न धार्मिकः ।
काणेन चक्षुषा किं वा, चक्षुः-पीडैव केवलम् ॥

किं च—

स जातो येन जातेन, याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे, मृतः को वा न जायते ॥

तत् कथम् इदानीम्, एते मम पुत्राः गुणवन्तः क्रियन्ताम् ?

उद्यमेन हि सिध्यन्ति, कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य, प्रविशन्ति मुखे मृगाः ॥

एवं चिन्तयित्वा, स राजा पण्डितसभां कारितवान् । राजोवाच— भो भोः पण्डिताः ! श्रूयताम् । अस्ति कश्चिद् एवंभूतो विद्वान्, यो मम पुत्राणाम्, उन्मार्गगामिनाम्, अनधिगतशास्त्राणाम्, इदानीम् नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः ? यतः—

अनन्तरं सर्वे जालेन बद्धा बभूवुः। ततो यस्य वचनात् तत्रावलम्बिताः, तं सर्वे तिरस्कुर्वन्ति। तस्य तिरस्कारं श्रुत्वा, चित्रग्रीवं उवाच। नायमस्य दोषः। यतः—

आपदां कथितः पन्था, इन्द्रियाणाम् असंयमः।
तज्जयः, संपदां मार्गो, येनेष्टं तेन गम्यताम्॥

विपत्काले, विस्मय एव कापुरुषलक्षणम्। तदत्र धैर्यम् अवलम्ब्य, प्रतीकारश्चिन्त्यताम्। यतः—

षड् दोषाः पुरुषेणेह, हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध, आलस्यं दीर्घसूत्रता॥

इदानीमप्येवं क्रियताम्। सर्वैरेकचित्तीभूय, जालमादाय, उड्डीयताम्।

अल्पानामपि वस्तूनां, संहतिः कार्यसाधिका।
तृणैर्गुणत्वमापन्नै-र्बध्यन्ते मत्तदन्तिनः॥
संहतिः श्रेयसी पुंसां, स्वकुलैरल्पकैरपि।
तुषेणापि परित्यक्ता, न प्ररोहन्ति तण्डुलाः॥

इति विचिन्त्य, पक्षिणः सर्वे, जालमादाय, उत्पतिताः। अनन्तरं, स व्याधः, सुदूराद्, जालापहारकान् तान् अवलोक्य, पश्चात् प्रधावन्, अचिन्तयत्। यदा एते निपतिष्यन्ति, तदा मे वशम् एष्यन्ति। ततस्तेषु चक्षुर्विषयातिक्रान्तेषु पक्षिषु, स व्याधो निवृत्तः। अथ लुब्धकं निवृत्तं दृष्ट्वा, कपोता ऊचुः। किमिदानीं कर्तुम् उचितम्। चित्रग्रीव उवाच। "माता, मित्रम्, पिता चेति, स्वभावात् त्रितयम् हितम्।" तदस्माकं मित्रं, हिरण्यको नाम

The lessons, as printed below, are presented in a revised form. They are adaptations of the original text and do not follow the original order of Hitopadeśa. ]

# पञ्चमः पाठः ॥ ५ ॥

## ( हितोपदेशे—लुब्धक-कपोतानाम् कथा )

अस्ति गोदावरीतीरे विशालः शाल्मली-तरुः। तत्र नाना-दिग्देशाद् आगत्य रात्रौ पक्षिणो निवसन्ति। अथ कदाचिद्, अवसन्नायां रात्रौ, कश्चिद् व्याधस्तत्र समायातः। अथ तेन व्याधेन, तण्डुल-कणान् विकीर्य जालं विस्तीर्णम्। स च प्रच्छन्नो भूत्वा स्थितः। तस्मिन्नेव काले, चित्रग्रीव-नामा कपोत-राजः सपरिवारो वियति विसर्पन्, तांस्तण्डुल-कणान् अव-लोकयामास। ततः कपोतराजः तण्डुल-कण-लुब्धान् कपोतान् प्रत्याह। कुतोऽत्र निर्जने वने तण्डुल-कणानां सम्भवः। तन्नि-रूप्यतां तावत्। भद्रमिदं न पश्यामि। एतद्वचनं श्रुत्वा, कश्चित् कपोतः सदर्पम् आह। आः किमेवमुच्यते! भूतलेऽस्मिन्, शङ्काभिः सर्वम् आक्रान्तम्।

ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः।
परभाग्योपजीवी च षडेते दुःखभागिनः॥

एतत् श्रुत्वा, सर्वे कपोतास्तत्रोपविष्टाः। यतः। बहुश्रुता अपि जना लोभमोहिताः क्लिश्यन्ते। उक्तञ्च—

लोभात् क्रोधः प्रभवति, लोभात् कामः प्रजायते।
लोभान्मोहश्च नाशश्च, लोभः पापस्य कारणम्॥

प्रभुत्वं त्वयि युज्यते। एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि। अतोऽहं ब्रवीमि—

यानि कानि च मित्राणि, कर्तव्यानि शतानि च।
पश्य मूषिकमित्रेण, कपोता मुक्तबन्धनाः॥

---

## षष्ठः पाठः ॥ ६ ॥

### ( हितोपदेशे—मृग-काक-शृगाल-कथा )

अस्ति मगधदेशे चम्पकवती नाम, अरण्यानी। तस्या चिरात्, महता स्नेहेन मृगकाकौ निवसतः। सच मृगः स्वेच्छया भ्राम्यन्, पुष्टाङ्गः केनचित् शृगालेनावलोकितः। तं दृष्ट्वा शृगालोऽचिन्तयत्। आः कथमेतन्मांसं सुललितं भक्षयामि। भवतु। विश्वासं तावदुत्पादयामि। इत्यालोच्य, उपसृत्याब्रवीत्। मित्र ! कुशलं ते। मृगेणोक्तम्। कस्त्वम्। स ब्रूते। क्षुद्रबुद्धिनामा जम्बुकोऽहम्। अत्रारण्ये मित्र-बन्धु-हीनो, मृतवद्, एकाकी निवसामि। इदानीं, भवन्तं मित्रमासाद्य, पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि। अधुना मया तवानुचरेण सर्वथा भवितव्यम्। मृगेणोक्तम्। एवमस्तु। ततोऽस्तंगते सवितरि, मृगस्य वासभूमिं प्रति, मृगजम्बुकौ गतौ। तत्र चम्पकवृक्षशाखायां, सुबुद्धिनामा काको, मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्। सखे चित्राङ्ग ! कोऽयं द्वितीयः। मृगो ब्रूते। जम्बुकोऽयम्। अस्मत् सख्यम् इच्छन् आगतः। काको ब्रूते। मित्र ! अकस्मादागन्तुना सह

मूषिकराजः, चित्रवने निवसति । सोऽस्माकं पाशान्, छेत्स्यति । इत्यालोच्य, सर्वे हिरण्यक-विवर-समीपं गताः । ततो हिरण्यकः कपोतावपात-भयात्, चकितः तूष्णीं स्थितः । चित्रग्रीव उवाच । सखे हिरण्यक ! किम् अस्मान् न संभाषसे । ततो हिरण्यक-स्तद्वचनं प्रत्यभिज्ञाय, ससंभ्रमम्, बहिर्निःसृत्य अब्रवीत् । आः पुण्यवानस्मि । प्रियसुहृन्मे चित्रग्रीवः समायातः । पाशबद्धां-श्चैतान् दृष्ट्वा, सविस्मयः, क्षणं स्थित्वा, हिरण्यकः, चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरम् उपसर्पति । चित्रग्रीव उवाच । मित्र ! मा मैवम् । अस्मदाश्रितानाम् एषां तावत् पाशांश्छिन्धि । तदा मम पाशं पश्चात् छेत्स्यसि । हिरण्यकोऽप्याह । अहमल्पशक्तिः । दन्ताश्च मे कोमलाः । तदेतेषां पाशांश्छेत्तुम् कथम् समर्थः । तद् यावन्मे दन्ता न त्रुट्यन्ति, तावत् तव पाशं छिनद्मि । तदनन्तरम्, एतेषामपि बन्धनं यावच्छक्यं छेत्स्यामि । चित्रग्रीव उवाच । अस्त्येवम् । तथापि यथाशक्ति, एतेषां बन्धनं खण्डय । अहम-स्मदाश्रितानां दुःखं सोढुं सर्वथाऽसमर्थः । उक्तं च—

धनानि जीवितं चैव, परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो, विनाशे नियते सति ॥

अयमपरश्चासाधारणो हेतुः ।

जाति-द्रव्य-गुणानां च, साम्यमेषां मया सह ।
मत्प्रभुत्व-फलं ब्रूहि, कदा किं तद् भविष्यति ॥

एतच्छ्रुत्वा हिरण्यकः प्रहृष्टमनाः पुलकितः सन्नब्रवीत् । साधु मित्र ! साधु ! अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि

उल्लसितो ब्रूते। सखे! छिन्द्धि तावन् मम वन्धनम्। सत्वरं त्रायस्व माम्। जम्बुकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत्। दृढस्तावदयं वन्धः। ब्रूते च। सखे! स्नायुनिर्मिता एते पाशाः। तदद्य भट्टारक-वारे कथमेतान् दन्तैः स्पृशामि। मित्र! यदि नान्यथा मन्यसे, तदा प्रभाते यत् त्वया उच्यते, तन्मया कर्तव्यम्। इत्युक्त्वा तत्समीप आत्मानमाच्छाद्य स्थितः सः॥

अनन्तरं स काकः प्रदोषकाले, मृगमनागतम् अवलोक्य, इतस्ततोऽन्विष्य तथाविधं दृष्ट्वा, उवाच। सखे! किमेतत्? मृगेणोक्तम्। अवधीरित-सुहृद्वाक्यस्य फलमेतत्। काको ब्रूते। स शृगालः क्व? मृगेणोक्तम्। मन्मांसार्थी तिष्ठत्यत्रैव। काको ब्रूते। मित्र! उक्तमेव मया पूर्वम्—

परोक्षे कार्यहन्तारं, प्रत्यक्षे प्रियवादिनम्।
वर्जयेत् तादृशं मित्रं, विषकुम्भं पयोमुखम्॥

(दीर्घं निःश्वस्य) अरे वञ्चक! किं त्वया पापकर्मणा कृतम्। अथवा स्थितिरियं दुर्जनानाम्।

दुर्जनः प्रियवादी च, नतद् विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे, हृदये तु हलाहलम्॥

अथ प्रभाते, स क्षेत्रपतिर्लगुडहस्तः, तं प्रदेशमागच्छन्, काकेनावलोकितः। तमालोक्य काकेनोक्तम्। सखे मृग! त्वमात्मानं मृतवत् संदर्श्य, वातेन उदरं पूरयित्वा, पादान् स्तब्धीकृत्य तिष्ठ। यदाहं शब्दं करोमि तदा त्वं सत्वरमुत्थाय पलायिष्यसि। मृगस्तथैव काकवचनेन स्थितः। ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन, अवलोकितः। तथाविधं मृगमवलोक्यासौ, "आः स्वयं मृतोऽयम्"

विश्वासो नैव युक्तः । तन्न भद्रमाचरितम् । इत्याकर्ण्य, स जम्बुकः सकोपमाह । मृगस्य प्रथमदर्शनदिने भवानपि, अज्ञात-कुल-शील आसीत् । तद् भवता सह, कथमद्ययावद्, एतस्य स्नेहानुवृत्तिः, उत्तरोत्तरं वर्धते ।

यत्र विद्वज्जनो नास्ति, श्लाघ्यस्तत्राल्पधीरपि ।
निरस्त-पादपे देशे, एरण्डोऽपि द्रुमायते ॥

अन्यच्च—

अयं निजः परो वेति, गणना लघुचेतसाम् ।
उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥

यथा चायं मृगो मम बन्धुस्तथा भवानपि । मृगोऽब्रवीत् । किमनेन उत्तरोत्तरेण । सर्वैरेकत्र विश्रम्भालापैः सुखमनुभवद्भिः स्थीयताम् । काकेनोक्तम् । एवमस्तु ॥

अथ ततः सर्वे यथाभिमतदेशं गताः । एकदा निभृतं शृगालो ब्रूते । सखे मृग ! एतस्मिन्नेव वनैकदेशे सस्यपूर्णं क्षेत्रमस्ति । तदहं त्वां तत्र नीत्वा दर्शयामि । तथा कृते सति, मृगः प्रत्यहं तत्र गत्वा, सस्यं खादति । अथ क्षेत्रपतिना, तद् दृष्ट्वा, पाशास्तत्र नियोजिताः । अनन्तरं पुनरागतो मृगस्तत्र चरन्, पाशैर्बद्धोऽचिन्तयत् । को मामितः, कालपाशादिव व्याधपाशात् त्रातुम्, मित्रादन्यः समर्थः । अत्रान्तरे जम्बुकस्तत्रागत्य, उपस्थितोऽचिन्तयत् । फलितं तावदस्माकं कपट-प्रबन्धेन । मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति । एतस्य, उत्कृत्यमानस्य, मांसासृगनुलिप्तानि [illegible] मृगस्तं दृष्ट्वा

मार्जारोऽहम् । गृध्रो ब्रूते । तद् दूरमपसर । नो चेद् हन्तव्योऽसि मया । मार्जारोऽवदत् । श्रूयतां तावदस्मद्-वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । गृध्रो ब्रूते । ब्रूहि । कीदृग्व्यापारवान् ? सोऽवदत् । अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी, ब्रह्म-चर्येण चान्द्रायण-व्रतम् आचरंस्तिष्ठामि । युष्मांश्च धर्मज्ञान-रतान्, विश्वासभूमयः पक्षिणः सर्वे, सर्वदा ममाग्रे स्तुवन्ति । अतो भवद्भ्यो विद्या-वयो-वृद्धेभ्यो धर्मं श्रोतुम् इहागतः । भवन्तश्च एतादृशा धर्मज्ञा, यन्माम् अतिथिम् हन्तुमुद्यताः । गृहस्थस्य धर्मश्चैष समुदीरितः—

अरावप्युचितं कार्यम्, आतिथ्यं, गृहमागते ।
छेत्तुमप्यागते छायाम्, नोपसंहरते द्रुमः ॥

किं च । यद्यन्नं नास्ति, तदा प्रीतिवचसाप्यतिथिः पूज्यः । अन्यच्च—

निर्गुणेष्वपि सत्त्वेषु, दयां कुर्वन्ति साधवः ।
नहि संहरते ज्योत्स्नां, चन्द्रश्चाण्डाल-वेश्मनि ॥

गृध्रोऽवदत् । मार्जारा हि मांसरुचयो भवन्ति । पक्षिशावका-श्चात्र निवसन्ति । तेनाहमेवं ब्रवीमि । मार्जारोऽप्येवं श्रुत्वा, भूमिं स्पृष्ट्वा, कर्णौ स्पृशति । ब्रूते च । मया धर्मशास्त्रं श्रुत्वा, वीतरागेण, इदं दुष्करं व्रतं चान्द्रायणम् अध्यवसितम् । यतः, परस्परं विवदमानानामपि धर्मशास्त्राणाम्, "अहिंसा परमो धर्मः" इत्यैकमत्यम् । यतः—

सर्वहिंसानिवृत्ता ये, नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च, ते नराः स्वर्गगामिनः ॥

इत्युक्त्वा, मृगं बन्धनान् मोचयित्वा, पाशान् संवरितुं सयत्नो बभूव। ततः कियद्दूरेऽन्तरिते क्षेत्रपतौ, स मृगः काकस्य शब्दं श्रुत्वा, ससंभ्रमः समुत्थाय पलायितः। तमुद्दिश्य, तेन क्षेत्रपतिना, प्रकोपात् क्षिप्तलगुडेन शृगालो व्यापादितः। अतोऽहम् ब्रवीमि—

भक्ष्य-भक्षकयोः प्रीतिर्विपत्तेरेव कारणम्।
शृगालात् पाशबद्धोऽसौ, मृगः काकेन रक्षितः॥

---

## सप्तमः पाठः ॥ ७ ॥

### ( हितोपदेशे — गृध्र-मार्जारयोः कथा )

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः। तस्य कोटरे, दैवदुर्विपाकात्, गलित-नख-नयनो जरद्गवो नाम गृध्रः प्रतिवसति। अथ कृपया, तज्जीवनाय, तद्वृक्षवासिनः पक्षिणः, स्वाहारात् किञ्चित् उद्धृत्य, तस्मै ददति। तेनासौ जीवति। अथ कदाचित् दीर्घकर्णनामा मार्जारः पक्षि-शावकान् भक्षयितुं तत्रागतः। ततः, तमायान्तं दृष्ट्वा, पक्षि-शावकैर्भयार्तैः कोलाहलः कृतः। तच्छ्रुत्वा जरद्गवेनोक्तम्। कोऽयमायाति? दीर्घकर्णो गृध्रमवलोक्य सभयमाह। हा हतोऽस्मि। अधुना, अतिसन्निधानेन पलायनमप्यशक्यम्। तद् यथा भवितव्यं तद् भवतु। विश्वासमुत्पाद्यास्य समीपमुपगच्छामि। इत्यालोच्य उपसृत्य, अब्रवीत्। आर्य! त्वामभिवन्दे। गृध्रोऽवदत्। कस्त्वम्? सोऽब्रवीत्।

ततः केनापि धार्मिकेणाहम् उपदिष्टः। दानधर्मम् आचरतु भवान् इति। तदुपदेशाद् इदानीम् अहं स्नान-शीलो, दाता, वृद्धो, गलित-नख दंतो- दयावांश्च, कथं न विश्वास-भूमिः! उक्तं च—

इज्याध्ययन-दानानि, तपः सत्यं क्षमा दमः।
अलोभ इति मार्गोऽयं, धर्मस्याष्टविधः स्मृतः॥

मम च, एतावान् लोभविरहो, येन स्व-हस्तगतमपि सुवर्ण-कङ्कणं, यस्मैकस्मैचिद्, दातुम् इच्छामि। तथापि, 'व्याघ्रो मानुषं खादतीति' लोकप्रवादो दुर्निवारः। मया च धर्मशास्त्राणि, अधीतानि। शृणु—

प्राणा यथात्मनोऽभीष्टा, भूतानामपि ते तथा।
आत्मौपम्येन सर्वत्र, दयां कुर्वन्ति साधवः॥

अपरं च–

मातृवत् पर-दारेषु, पर-द्रव्येषु लोष्टवत्।
आत्मवत् सर्वभूतेषु, यः पश्यति स पण्डितः॥

त्वं चातीव दुर्गतः। तेन, तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्—

दरिद्रान् भर कौन्तेय, मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं, नीरुजस्तु किमौषधैः॥

तदत्र सरसि स्नात्वा, सुवर्ण-कङ्कणमिदं प्रतिगृहाण। ततो जात-विश्वासो यावदसौ सरः-स्नातुं प्रविष्टः, तावदेव महापङ्के निमग्नः, पलायितुम् अक्षमः। पङ्के पतितं दृष्ट्वा, व्याघ्रोऽवदत्।

एवं विश्वास्य स मार्जारः तरु-कोटरे स्थितः। ततो दिनेषु गच्छत्सु, पक्षि-शावकान् आक्रम्य, कोटरमानीय, प्रत्यहं खादति। अथ येषाम् अपत्यानि खादितानि, तैः शोकार्तैर्विलपद्भिः, इतस्ततो जिज्ञासा समारब्धा। तत्परिज्ञाय, मार्जारः कोटरान् निःसृत्य पलायितः। पश्चात्, पतत्रिभिः, इतस्ततो निरूपयद्भिः, तत्र तरु-कोटरे शावकास्थीनि प्राप्तानि। अनन्तरं च, अनेनैव शावकाः खादिता इति निश्चित्य, मिलित्वा, तैः पक्षिभिः, स गृध्रो व्यापादितः। अतोऽहं ब्रवीमि—

अज्ञातकुलशीलस्य, वासो देयो न कस्यचित्।
मार्जारस्य हि दोषेण, हतो गृध्रः जरद्गवः॥

---

## अष्टमः पाठः ॥ ८ ॥

### ( हितोपदेशे—वृद्धव्याघ्रस्य कथा )

अहमेकदा दक्षिणारण्ये चरन्नपश्यम्। एको वृद्ध-व्याघ्रः स्नातः, कुश-हस्तः, सरस्तीरे ब्रूते। भो भोः पान्थाः! इदं सुवर्ण-कङ्कणं गृह्यताम्। तद्वचनमाकर्ण्य, भयात्, कोऽपि तत्पार्श्वं न याति। ततो लोभाकृष्टेन केनचित् पान्थेन, आलोचितम्। भाग्येन एतत् सम्भवति। ( प्रकाशं ब्रूते ) कुत्र तव कङ्कणम्। व्याघ्रो हस्तं प्रसार्य दर्शयति। पान्थोऽवदत्। कथं मारात्मके त्वयि विश्वासः। व्याघ्र उवाच। शृणु रे पान्थ। प्रागेव यौवनदशायाम् अतिदुर्वृत्त आसम्। अनेक-गो-मानुषाणां वधात् मे पुत्रा दाराश्च मृताः। सम्प्रति निर्वंशोऽस्मि।

भवन्ति । गर्दभो ब्रूते । शृणु रे बर्वर ! 'याचते कार्य-काले यः स किंभृत्यः स किंसुहृत्' । कुक्कुरो ब्रूते । 'भृत्यान् संभावयेद् यस्तु कार्य-काले स किंप्रभुः' । ततो गर्दभः सकोपमाह । आः पापीयांस्त्वम्, यः स्वामि-कार्योपेक्षां करोषि । भवतु । यथा स्वामी जागर्ति तथा मया कर्तव्यम् । यतः—

पृष्ठतः सेवयेदर्कं, जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन, परलोकम् अमायया ॥

इत्युक्त्वा सोऽतीव चीत्कारं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो, निद्रा-विमर्द-कोपाद् उत्थाय, गर्दभं लगुडेन ताडयामास । अतोऽहं ब्रवीमि—

पराधिकार-चर्चां यः, कुर्यात् स्वामि-हितेच्छया ।
स विषीदति, चीत्कारात्, ताडितो गर्दभो यथा ॥

---

## दशमः पाठः ॥ १० ॥

### ( हितोपदेशे —सिंह-मूषिक-विडाल-कथा )

अस्त्युत्तरापथेऽर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंहः । तस्य, पर्वत-कन्दरम्, अधिशयानस्य, केसराग्रं, मूषिकः कश्चिच्छिनत्ति । स सिंहः केसराग्रं लूनं बुद्ध्वा, कुपितो, विवरान्तर्गतं मूषिकम् अलभमानोऽचिन्तयत् । किं विधेयमत्र । भवतु । एवं श्रूयते—

क्षुद्रशत्रुर्भवेद् यस्तु, विक्रमान्न स नश्यते ।
तं निहन्तुं पुरस्कार्यः, सदृशस्तस्य सैनिकः ॥

अहह ! महापङ्के पतितोऽसि। अतस्त्वाम् उत्थापयामि। इत्युक्त्वा शनैः-शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्—

अवशेन्द्रिय-चित्तानां, हस्ति-स्नानमिव क्रिया।
दुर्भगाभरणप्रायो, ज्ञानं भारः क्रियां विना ॥

तन्न मया भद्रं कृतम्, यदत्र मारात्मके विश्वासः कृतः। तथा ह्युक्तम्—

सर्वस्य हि परीक्ष्यन्ते, स्वभावा नेतरे गुणाः।
अतीत्य हि गुणान् सर्वान्, स्वभावो मूर्ध्नि वर्तते ॥

इति चिन्तयन्नेव, तेनासौ व्याघ्रेण, व्यापादितः खादितश्च। अतः सर्वथा, अविचारितं कर्म न कर्त्तव्यम् ॥

---

## नवमः पाठः ॥ ९ ॥

### ( हितोपदेशे—रजक-गर्दभयोः कथा )

अस्ति वाराणस्यां कर्पूरपटो नाम रजकः। स चैकदा निर्भरं प्रसुप्तः। तदनन्तरं द्रव्याणि हर्तुं तद्गृहं चौरः प्रविष्टः। तस्य पश्चाद् गर्दभो बद्धस्तिष्ठति। कुक्कुरश्चोपविष्टः। तं चौरमवलोक्य, गर्दभः श्वानमाह। तव तावदयं व्यापारः। तत्किमिति, त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि? कुक्कुरो ब्रूते। मम नियोगस्य चर्चा त्वया न कर्तव्या। त्वमेव जानासि, यथाहमेतस्याहर्निशं गृहरक्षां करोमि। यतोऽयं चिरान् निर्वृतो ममोपयोगं न जानाति। तेनाधुनापि ममाहारदानेऽपि मन्दादरः। विना विधुरदर्शनं स्वामिनः उपजीविषु मन्दादरा

तन्मन्दं-मन्दमुपगच्छामि । ततः सिंहोऽपि क्षुधा-पीडितः कोपात् तमुवाच । कुतस्त्वं विलम्ब्य, आगतोऽसि । शशकोऽब्रवीत् । नाहमपराद्धः । पथि सिंहान्तरेण बलाद् धृतः । तस्याग्रे पुनरागमनाय शपथं कृत्वा, स्वामिनं निवेदयितुम् अत्रागतोऽस्मि । सिंहः सकोपमाह । सत्वरं गत्वा मां दर्शय । क्वासौ दुरात्मा तिष्ठति । ततः शशकस्तं गृहीत्वा गभीर-कूप-समीपं गतः । अत्रागत्य, "पश्यतु स्वामी" त्युक्त्वा, तस्मिन् कूप-जले, तस्यैव प्रतिबिम्बं दर्शितवान् । ततोऽसौ दर्पाध्मातः, तस्योपरि, आत्मानं निक्षिप्य पञ्चत्वं गतः । अतोऽहं ब्रवीमि—

यस्य बुद्धिर्बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः, शशकेन निपातितः ॥

---

## द्वादशः पाठः ॥ १२ ॥

### ( हितोपदेशे—काक-कृष्णसर्प-राजपुत्रादि-कथा )

कस्मिंश्चित् तरौ वायसदम्पती निवसतः । तयोश्चापत्यानि तरु-कोटरावस्थित-कृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी ब्रूते । स्वामिन् ! त्यज्यतामयं तरुः । अत्र, यावत् कृष्णसर्पः, तावदावयोः संततिः कदाचिदपि न भविष्यति । वायसो ब्रूते । प्रिये ! न भेतव्यम् । वारं-वारं मया, एतस्य महापराधः सोढः । इदानीं पुनर्न क्षन्तव्यः । वायस्याह । कथमनेन बलवता कृष्णसर्पेण सार्धं भवान् विग्रहीतुं समर्थः । वायसो ब्रूते । अलमनया शङ्कया । यतः । यस्य बुद्धिर्बलं तस्य । वायसी ब्रूते ।

इत्यालोच्य, तेन ग्रामं गत्वा, दधिकर्णनामा विडालो मांसाद्याहारेण संतोष्य, प्रयत्नादानीय स्व-कन्दरे धृतः। ततस्तद्भयान् मूषिको बहिर्न निःसरति। तेनासौ सिंहोऽक्षतकेसरः सुखं स्वपिति। मूषिक-शब्दं यदा यदा शृणोति, तदा तदा सविशेषं तं विडालं मांसाहार-दानेन संवर्धयति। अथैकदा स मूषिकः क्षुधा पीडितो बहिः संचरन् तेन मार्जारेण प्राप्तो व्यापादितः खादितश्च। अनन्तरं स सिंहो, यदा, कदाचिदपि मूषिक-शब्दं न शुश्राव, तदा, उपयोगाभावात्, तस्य विडालस्याहार-दाने मन्दादरो बभूव। अतोऽहं ब्रवीमि—

निरपेक्षो न कर्तव्यो, भृत्यैः स्वामी कदाचन।
निरपेक्षं प्रभुं कृत्वा, भृत्यः स्याद् दधिकर्णवत्॥

---

## एकादशः पाठः ॥ ११ ॥

( हितोपदेशे—सिंह-शशकयोः कथा )

अस्ति मन्दराभिधाने पर्वते दुर्दान्तो नाम सिंहः। स च सर्वदा पशूनां वधं कुर्वन्नास्ते। ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः। देव! किमर्थं सर्वपशुवधः क्रियते। वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुम् उपढौकयामः। सिंहेनोक्तम्। यद्येतद् अभिमतं भवताम्, तर्हि भवतु। ततः प्रभृति, प्रत्यहम् एकैकं पशुम् उपकल्पितं भक्षयन्नास्ते। अथ कदाचिद् वृद्धशशकस्य वारः समायातः। सोऽचिन्तयत्—

त्रास-हेतोर्विनीतिस्तु, क्रियते जीविताशया।
पञ्चत्वं चेद् गमिष्यामि, किं सिंहानुनयेन मे॥

वृक्षमारुह्य सर्वे नीडा भग्नाः। तेषां पक्षिणाम् अण्डानि चाधः पातितानि। अतोऽहं ब्रवीमि—

उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये।
पयःपानं भुजङ्गानां, केवलं विष-वर्धनम् ॥

---

## चतुर्दशः पाठः ॥ १४ ॥

### ( हितोपदेशे—नीलवर्णश्रृगाल-कथा )

अस्ति। श्रृगालः कश्चित् स्वेच्छया नगरोपान्ते भ्रमन् नील-संधान-भाण्डे निपतितः। पश्चात्, तत उत्थातुम् असमर्थः, प्रातर्, आत्मानं मृतवत् संदर्श्य स्थितः। अथ नीली-भाण्ड-स्वामिना, असौ, उत्थाप्य, दूरे नीत्वा, परित्यक्तः। ततोऽसौ वनं गत्वा, आत्मानं नीलवर्णमवलोक्य, अचिन्तयत्। अहमिदानीमुत्तमवर्णः। तदात्मनः किमुत्कर्षं न साधयामि। इत्यालोच्य श्रृगालान् आहूय तेनोक्तम्। अहं भगवत्या वन-देवतया, स्व-हस्तेन, अरण्य-राज्ये, सर्वौषधि-रसेन, अभिषिक्तः। पश्यत मम वर्णम्। तदद्यारभ्य, अस्मदाज्ञया, अस्मिन्नरण्ये व्यवहारः कार्यः। श्रृगालाश्च तं विशिष्टवर्णम् अवलोक्य, साष्टाङ्गपातं प्रणम्य, ऊचुः। यथाज्ञापयति देवः। ततोऽनेन क्रमेण, सर्वेष्वरण्य-वासिषु, आधिपत्यं तस्य बभूव। ततस्तेन सिंह-व्याघ्रादीन् परि-जनान् प्राप्य, श्रृगालानवलोक्य लज्जमानेन, अवज्ञया दूरीकृताः स्वजातयः। ततो विषण्णान् श्रृगालानवलोक्य, वृद्ध-श्रृगालेन केनचित् प्रतिज्ञातम्। मा विषीदत। एवं चेद्, अनेन, अनीतिज्ञेन, वयं मर्मज्ञाः परिभूताः, तद् यथायं नश्यति, तन्मया विधेयम्।

## षोडशः पाठः ॥ १६ ॥

### ( हितोपदेशे—मुनि-मूषिक-कथा )

अस्ति गौतमारण्ये महातपा नाम मुनिः। तेन, आश्रम-सन्निधाने मूषिक-शावकः काक-मुखाद् भ्रष्टो दृष्टः। ततो दयालुना तेन मुनिना, नीवार-कणैः स संवर्धितः। तं च मूषिकं खादितुम्, अनुधावन् विडालो मुनिना दृष्टः। पश्चात्, तपःप्रभावात्, तेन मुनिना, मूषिको बलिष्ठो विडालः कृतः। स विडालः कुक्कुराद् बिभेति। ततोऽसौ कुक्कुरः कृतः। कुक्कुरस्य व्याघ्रात् महद् भयम्। तदनन्तरं स व्याघ्रः कृतः। अथ व्याघ्रमपि तं मूषिक-निर्विशेषं पश्यति मुनिः। अतः सर्वे तत्रस्था जनास्तं व्याघ्रं दृष्ट्वा वदन्ति। अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः। एतच्छ्रुत्वा स व्याघ्रः सव्यथोऽचिन्तयत्। यावदनेन मुनिना जीवितव्यम्, तावदिदं मम स्वरूपाख्यानम् अकीर्तिकरं न पलायिष्यते। इति समालोच्य मुनिं हन्तुं समुद्यतः। ततो मुनिना, तस्य चिकीर्षितं ज्ञात्वा, 'पुनर्मूषिको भव" इत्युक्त्वा, मूषिक एव कृतः। अतोऽहं ब्रवीमि—

नीचः श्लाघ्य-पदं प्राप्य, स्वामिनं लोप्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य, मुनिं हन्तुं गतो यथा ॥

व्यापादितं मृगमादाय गच्छता, घोराकृतिः शूकरो दृष्टः। तेन व्यापादितं मृगं भूमौ निधाय, शूकरः शरेणाहतः। शूकरेणापि स व्याधो हतः। अथ तयोः पादास्फालनेन सर्पोऽपि मृतः। अथानन्तरं दीर्घरावो नाम जम्बुकः परिभ्रमन्नाहारार्थी, तान् मृग व्याध-सर्प-शूकरान् अपश्यत्। अचिन्तयच्च। अहो! अद्य महद् भोज्यं मे समुपस्थितम्। एषां मांसैर्मासत्रयं सुखेन गमिष्यति। ततः प्रथम-बुभुक्षायाम् इदं निःस्वादु कोदण्ड-लग्नं स्नायु-बन्धनं खादामि। इत्युक्त्वा, तथा कृते सति, छिन्ने स्नायु-बन्धने, उत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरावः पञ्चत्वं गतः। अतोऽहं ब्रवीमि—

कर्तव्यः सञ्चयो नित्यं, कर्तव्यो नातिसञ्चयः।
पश्य सञ्चयशीलोऽसौ, धनुषा जम्बुको हतः॥

---

## नवदशः पाठः ॥ १९ ॥

### ( हितोपदेशे—धूर्त-छाग-ब्राह्मण-कथा )

अस्ति गौतमारण्ये प्रस्तुत-यज्ञः कश्चिद् ब्राह्मणः। स च यज्ञार्थं ग्रामान्तरात् छागमुपक्रीय, स्कन्धे कृत्वा गच्छन्, धूर्तत्रयेणावलोकितः। ततस्ते धूर्ता, "यद्येषच्छागः केनाप्युपायेन प्राप्य खाद्यते तदा मति-प्रकर्षो भवति," इत्यालोच्य, प्रान्तरे वृक्षत्रय-तले, ब्राह्मणस्य वर्त्मनि, उपविश्य स्थिताः। तत्र, एकेन धूर्तेन, स ब्राह्मणो गच्छन्, अभिहितः। भो ब्राह्मण! किमिति! त्वया कुक्कुरः स्कन्धेन उह्यते? ब्राह्मणो ब्रूते। नायं श्वा। यज्ञच्छागोऽयम्। अनन्तरं

नकुलेन, बालक-समीपम् आगच्छता, कृष्णसर्पो दृष्टो व्यापादितश्च। अथासौ नकुलो, ब्राह्मणमायान्तमवलोक्य, रक्त-विलिप्त-मुखपादः सत्वरमुपगम्य, तस्य चरणयोर्लुलोठ। ततोऽसौ ब्राह्मणः, तं तथाविधं दृष्ट्वा, "मम पुत्रोऽनेन भक्षितः" इत्यवधार्य, व्यापादितवान्। अनन्तरं यावदसौ, उपसृत्य, पश्यति ब्राह्मणः, तावद् बालकः सुस्थः, सर्पश्च व्यापादितस्तिष्ठति। ततस्तम् उपकारकमेव नकुलं निरूप्य, संतप्तचेताः स परं विषादम् अगमत्। अतोऽहं ब्रवीमि—

योऽर्थ-तत्त्वमविज्ञाय, क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो, ब्राह्मणो नकुलाद् यथा॥

---

## एकविंशः पाठः ॥ २१ ॥

### ( हितोपदेशे—प्रकीर्णा नीतिश्लोकाः )

दुर्जनेन समं सख्यं, प्रीतिं चापि न कारयेत्।
उष्णो दहति चाङ्गारः, शीतः कृष्णायते करम्॥ १॥
दुर्जनः परिहर्तव्यो, विद्ययाऽलङ्कृतोऽपि सन्।
मणिना भूषितः सर्पः, किमसौ न भयङ्करः॥ २॥
मनस्यन्यद् वचस्यन्यद्, कार्यमन्यद् दुरात्मनाम्।
मनस्येकं वचस्येकं, कर्मण्येकं महात्मनाम्॥ ३॥
सर्वाः सम्पत्तयस्तस्य, सन्तुष्टं यस्य मानसम्।
उपानद्-गूढ-पादस्य, ननु चर्मावृतेव भूः॥ ४॥

दुःखितोऽपि चरेद्धर्मम्, यत्रकुत्राश्रमे रतः।
समः सर्वेषु भूतेषु, न लिङ्गं धर्मकारणम् ॥१४॥

सत्योऽनुपालयेत् सत्यम्,
सन्धितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तम्,
आर्यो नायात्यनार्यताम् ॥१५॥

---

[ Chāṇakya was a great politician of ancient India, who lived at Patna in the 3rd Century B. C. He has written a great work on Politics known as Kauṭaly's Arthaśāstra; Kauṭalya being another name of Chāṇakya. The following aphorisms are attributed to him. ]

## द्वाविंशः पाठः ॥ २२ ॥

१. सुखस्य मूलं धर्मः। २. धर्मस्य मूलम् अर्थः। ३. अर्थस्य मूलं राज्यम्। ४. राज्यस्य मूलमिन्द्रियजयः। ५. न कामासक्तस्य कार्यानुष्ठानम्। ६. अग्निदाहादपि विशिष्टं वाक्पारुष्यम्। ७. पूर्वं निश्चित्य पश्चात् कार्यमारभेत। ८. कार्यान्तरे दीर्घसूत्रता न कर्तव्या। ९. न चलचित्तस्य कार्यावाप्तिः। १०. कदाचिदपि चारित्रं न लङ्घयेत्। ११. गुणवदाश्रयान्निर्गुणोऽपि गुणवान् भवति।

बालं न नयति तथा मूषिका अपि लोह-भार-घटितां तुलां न भक्षयन्ति । तदर्पय मे तुलां, यदि दारकेण प्रयोजनम् । एव विवदमानौ द्वावपि राजकुलं गतौ । तत्र श्रेष्ठी प्रोवाच । मम शिशुरनेन चौरेणापहृतः । अथ धर्माधिकारिणस्तमूचुः । भोः ! समर्प्यतां श्रेष्ठि-सुतः । स आह । किं करोमि पश्यतो मे, नदी-तटात्, श्येनेनापहृतः शिशुः । तच्छ्रुत्वा ते प्रोचुः । भो न सत्यमभिहितं भवता । किं श्येनः शिशुं हर्तुं समर्थो भवति । स आह । भो भोः ! श्रूयतां मद्वचः—

तुलां लोहसहस्रस्य, यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो, बालकं नात्र संशयः ॥

ते प्रोचुः । कथमेतत् । ततः श्रेष्ठी, सभ्यानाम् आदितः सर्वं वृत्तान्तं निवेदयामास । ततस्तैर्विहस्य, द्वावपि तौ परस्परं सम्बोध्य, तुला-शिशु-प्रदानेन संतोषितौ ।

अनेन श्रेष्ठिना दुष्टत्वं कृतम् । ततस्तत्फलं प्राप्तम् ॥

---

## पञ्चविंशः पाठः ॥ २५ ॥

### ( पञ्चतन्त्रे—धर्मबुद्धि-पापबुद्धि-कथा )

अस्ति । कस्मिंश्चिदधिष्ठाने वणिक्-सुतौ सुहृदौ स्तः । एको दुष्टबुद्धिरपरो धर्मबुद्धिः । तौ, अर्थोपार्जन-निमित्तं विशिष्टं देशान्तरं गतौ । अथ तत्र धर्मबुद्धिर्नामैकः' सार्थवाह-सुतो यः, तेन कस्यचित् साधोः पूर्व-स्थापितं कलशिका गतं स्वभाग्य-प्रचोदितं रौप्य-दीनार सहस्रं प्राप्तम् । स दुष्टबुद्धिना सह संप्रधार्य, 'कृतार्थावावाम्, स्वदेशं गच्छावः' इति प्रत्यागतौ । अधिष्ठान-

ते विस्मयमुपगताः। कथं वनस्पतिर्मन्त्रयिष्यतीति। कृत-प्रतिभुवौ स्वगृहं विसर्जितौ।

अथ दुष्टबुद्धिना स्वगृहं-गतेन पिताभिहितः। तात ! मद्धस्त-गतास्ते पणाः। किंतु वाङ्मात्रावबद्धास्तिष्ठन्ति। अहं तु त्वामद्य रात्रौ, वृक्ष-विवरेऽस्मिन् स्थापयामि। प्रभाते, धर्माधिकृत-समक्षं पृष्टः तं विभावयेति। ततस्तेनाभिहितम्। पुत्र ! विनष्टौ आवाम्। किं कारणम्। अनुपाय एषः। यथा हि—'उपायं चिन्तयेत् प्राज्ञो ह्यपायमपि चिन्तयेत्'। इति ब्रुवन्नपि, तेनासौ नीत्वा, स्थापितो वृक्ष-विवरे। अथ प्रभात-समये, अधिकरण-प्रकृति-प्रत्यक्षम्, धर्मशास्त्र-वचनाभिश्रावितेन वनस्पतिना, यथाप्रस्तुतमभिहितम्—'धर्मबुद्धिना, अर्थोऽपहृत' इति।

तच्च श्रुत्वा धर्मबुद्धिश्चिन्तयामास। कथम् अवाक्-पादपो वाचं व्याहरिष्यति। तत्कारणेनात्र भवितव्यम्। सर्वथा बुद्धिसाध्यम् एतत्। अथ धर्मस्थानीयान् आह। अहो विस्मयः! अद्यापि, अविप्लुत एव लोके धर्मबुद्धिरहम्। विजनेऽस्मिन् वने, एकाकी, आगम्य तद् द्रव्य गृहीतवान्। इत्युक्त्वा शुष्क-दारु-पर्ण-निचयै-र्वृक्षविवरमापूर्य, अग्निमादीपयितुमारब्धः। प्रदीप्ते च वह्नौ, समन्तत उज्ज्वली-भूताद् वृक्ष-विवरात्, स्फटिततनुः लुष्टकेशः स्रस्तत्वग् यदा जातो वणिक्, तदा भूमौ निपतितः।

तत्तु महद् वैकारिकं दृष्ट्वा, किमिदमिति, परं विस्मय-मुपगताः। किंचिज्जीवितं वणिजं पप्रच्छुः। किमिदम् अध्यवसितं भवतेति। ततोऽसावब्रवीत्। अनेन दुष्पुत्रेणाहम् अवस्थामिमां प्रापित इति। एवमभिवदन् पञ्चत्वमुपगतः। अनन्तरं धर्माधिकृता-स्तमर्थं ज्ञात्वा अभिहितवन्तः—

दुष्टबुद्धिरयं पापः शूले अव-तंस्यतामिति ॥

## षड्विंशः पाठः ॥ २६ ॥

### ( पञ्चतन्त्रे—शश-कपिञ्जल-मार्जार-कथा )

वायसो ब्रूते । अहं कस्मिंश्चिद् वृक्षे प्रतिवसामि । तत्रैव, अधस्तात्, कपिञ्जलः प्रतिवसति स्म । तत आवयोः परस्परमेव संवास-गुणाद्, अभेद्या प्रीतिरुत्पन्ना । प्रतिदिवसं च, कृताहार-विहारयोः, प्रथम-प्रदोषकाले, सुभाषित-प्रश्न-प्रतिप्रश्नैः कालोऽतिवर्तते । अथ कदाचिद् आलाप-वेलायां कपिञ्जलो नायाति । यतो मम हृद्गता, अतीवाकुलता समुत्पन्ना । एवं चाचिन्तयम् । किमसौ विनष्टो बद्धो वा । अथवा, अन्यावासे, एतस्य प्रीतिरुत्पन्ना येन नायातीति । शून्ये च तस्मिन् तदीयावासके, शश आगतः । तेनास्यावासोऽधिष्ठितः। ततोऽसौ कपिञ्जलोऽर्धमासत्रयेणायातः । शशं दृष्ट्वाब्रवीत् । अपगम्यतां मदीयनिकेतनादिति । स तमाह । मूर्ख ! न ते विदितम् । उपस्थान-भोग्य आवासो भुक्तिश्च । कपिञ्जल आह । सन्त्यत्र प्राश्निकाः । पृच्छामो देशभूपमिति । तथा नामेति प्रतिपाद्य, प्रस्थितो व्यवहारकरणाय । अहमपि कौतुकात्, तयोरेव पृष्ठतो गतः । पश्यामि किमत्र तथ्यमिति । नातिदूरं गत्वा कपिञ्जलः शशमाह । क आवयोर्व्यवहारं द्रक्ष्यतीति । असावब्रवीत् । नन्वयं नदी-पुलिनगतः, तपःसंश्रितः, सकल-शास्त्रपारगः, चिरजीवी, धर्मशास्त्रविन् मार्जार इति । अयमेवास्य संशयस्य च्छेत्ता । तच्च श्रुत्वा कपिञ्जलोऽब्रवीत् । अलमनेन क्षुद्रेण । उक्तं च—

नहि विश्वसनीयः स्यात्, तपस्विच्छद्मना स्थितः ।
दृश्यन्ते बहवस्तीर्थे, गलदन्तास्तपस्विनः ॥

तच्च श्रुत्वा मार्जारः तद्विश्वासनार्थम् सुतराम् आदित्याभिमुखो द्विपादः स्थितः। ऊर्ध्वबाहुर्निमीलितैकनयनो जपन्नासीत्। जपतश्च तस्य, विश्वस्त-हृदयौ तौ व्यवहार श्रावणम् अकुरुताम्। तेन चाभिहितम्। वृद्धत्वाद् हतेन्द्रियत्वाच्च नाति स्पष्टतरं शृणोम्यहम्। संनिकृष्टौ भूत्वा, उच्चैःश्रावयतम्। सुष्ठुतरं चादृतो भूत्वा धर्मशास्त्र-संबन्धमवोचत—

**धर्म एव हतो हन्ति, धर्मो रक्षति रक्षितः।**
**तस्माद्धर्मो न हन्तव्यः, कदाचिदपि साधुभिः॥**

तत् किं बहुना। तथा तौ छद्मना विश्वासं नीतौ येनाङ्कमुपगतौ हतौ चेति। अतोऽहं ब्रवीमि—

क्षुद्रमर्थपतिं प्राप्य, कदा विवदतोः सुखम्।
उभावपि क्षयं यातौ, यथा शशकपिञ्जलौ॥
द्वयोः कलहे तृतीयस्य लाभः॥

## सप्तविंशः पाठः॥ २७॥

### ( पञ्चतन्त्रे—सिंहकारका ब्राह्मणपुत्राः )

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मण-पुत्राः परस्परं मित्रभावमुपगता वसन्ति स्म। तेषां त्रयः शास्त्र-पारंगताः परन्तु बुद्धिरहिताः। एकस्तु बुद्धिमान्, केवलं शास्त्र-पराङ्मुखः। अथ तैः कदाचिन् मित्रैर्मन्त्रितम्। को गुणो विद्याया, येन देशान्तरं गत्वा,

भूपतीन् परितोष्य, अर्थोपार्जना न क्रियते। तत्पूर्वदेशं गच्छामः। तथानुष्ठिते, किंचिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह। अहो, अस्माकमेकः, चतुर्थो मूढः, केवलं बुद्धिमान्। न च राज-परिग्रहो बुद्ध्या लभ्यते विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि, तद्गच्छतु गृहम्। ततो द्वितीयेनाभिहितम्। भोः सुबुद्धे ! गच्छ त्वं स्वगृहे, यतस्ते विद्या नास्ति। ततस्तृतीयेणाभिहितम्। अहो न युज्यत एवं कर्तुम्। यतो वयं बाल्यात्प्रभृति, एकत्र क्रीडिताः। तदागच्छतु महानुभावः। अस्मदुपार्जित-वित्तस्य समभागी भविष्यतीति। तद्देपोऽपि गच्छेत्। एवमनुष्ठिते, तैर्वने, मृत-सिंहस्य अस्थीनि, अवलोकितानि। तदेकेन कथितम्। अहो अद्य विद्यायाः परीक्षां कुर्याम्। कश्चिद्देप प्राणी मृतस्तिष्ठति, तद् विद्या प्रभावेणैनं जीवितं करोमीत्यहम् अस्थि-संचयं करोमि। एकेन तावद् अस्थि-संचयः कृतः। द्वितीयेन चर्म-मांस-रुधिरम् संयोजितम्। तृतीयोऽपि यावज्जीवनं सञ्चारयति, तावत् सुबुद्धिना निषिद्धः। भोः ! तिष्ठतु भवान्। एप सिंहो निष्पाद्यते। यद्येनं सजीवं करिष्यति, ततः सर्वानपि व्यापादयिष्यति। इति तेनाभिहितः स आह। धिङ् ! मूर्ख। नाहं विद्याया विफलतां करोमि। ततस्तेनाभिहितम्। तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि। तथानुष्ठिते, यावत् सजीवः कृतस्तावत् ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य गृहे गतः। अतोऽहं ब्रवीमि—

वरं बुद्धिर्न सा विद्या, विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति, यथा ते सिंहकारकाः॥

---

# अष्टाविंशः पाठः ॥ २८ ॥

## ( पञ्चतन्त्रे—शृगालीसुत-सिंहशावक-कथा )

कस्मिंश्चिदुद्देशे सिंहदम्पती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयम् अजीजनत् । सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति । अथ, अन्यस्मिन् अहनि, तेन किमपि नासादितम् । येन, भ्रमतोऽपि तस्य रविरस्तं गतः । अथ तेन स्वगृहमागच्छता शृगाल-शिशुः प्राप्तः । स च बालकोऽयमित्यवधार्य, यत्नेन दंष्ट्रामध्य-गतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान् । ततः सिंह्याऽभिहितम् । भोः कान्त ! त्वया नीतं किंचिदस्माकं भोजनम् ? सिंह आह । प्रिये ! मयाद्यैनं शृगालशिशुं परित्यज्य न किंचित् सत्वमासादितम् । स च मया 'बालोऽयम्' इति मत्वा न व्यापादितो विशेषात् स्वजातीयश्च । उक्तं च—

स्त्री-विप्र-लिङ्गि-बालेषु, प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि संजाते, विश्वस्तेषु विशेषतः ॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेऽन्यत् किंचिदुपार्जयिष्यामि । सा प्राह । भोः कान्त ! त्वया बालकोऽयं विचिन्त्य न हतः । तत्कथम् एनम् अहं स्वोदरार्थं विनाशयामि । उक्तं च—

**अकृत्यं नैव कर्तव्यं, प्राणत्यागेऽपि संस्थिते ।**
**न च कृत्यं परित्याज्यम्, एष धर्मः सनातनः ॥**

तस्मात् ममायं तृतीयः पुत्रो भविष्यति । इत्येवमुक्त्वा तमपि स्व-स्तनक्षीरेण परां पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः

परस्परम् अज्ञात-जातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति । अथ कदाचित् तत्र वने भ्रमन् अरण्य-गजः समायातः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत् तेन शृगालसुतेनाभिहितम् । 'अहो ! गजोऽयं युष्मत्कुलशत्रुः । तन्न गन्तव्यम् । एतस्याभिमुखम्' । एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठ-बान्धव-भङ्गान्निरुत्साहतां गतौ । अथवा साध्विदमुच्यते—

एकेनापि सुधीरेण, सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं, भग्ने भङ्गमवाप्नुयात् ॥

अथ द्वावपि गृहं प्राप्य, पित्रोरग्रतो विहसन्तौ, ज्येष्ठभ्रातृ-चेष्टितम् ऊचतुः । यथा गजं दृष्ट्वा दूरतोऽपि नष्टः । सोऽपि तदाकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवः, ताम्रलोचनः तौ निर्भर्त्सयन्, परुषतर-वचनानि, उवाच । ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ । वत्स ! मैवम् कदाचिद् जल्प । भवदीय-लघुभ्रातरौ एतौ । अथासौ प्रभूत-कोपाविष्टः तामुवाच । 'किमहम् एताभ्यां, शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनः, येन मामुपहसतः । तन्मयावश्यमेव व्यापादनीयौ' । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती, अन्तर्विहस्य प्राह—

शूरोऽसि कृतविद्योऽसि, दर्शनीयोऽसि पुत्रक !
यस्मिन् कुले त्वमुत्पन्नो, गजस्तत्र न हन्यते ॥

तत् सम्यक् शृणु । वत्स ! त्वं शृगाली-सुतः । कृपया मया

शृगाल न जानीतः, तावद् द्रुततरं गत्वा स्वजातीयानां मध्ये भव। नो चेत्, आभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भय-व्याकुलमना, शनैःशनैरुपसृत्य स्वजात्या मिलितः।

श्रेयान् स्वधर्मो विगुणः, परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः, परधर्मो भयावहः॥

---

## नवविंशः पाठः ॥ २९ ॥

### ( पञ्चतन्त्रे—काकोलूकयोर्वैरम् )

अस्ति। अराजके सर्वपक्षिणां चित्तमुत्पन्नम्। कतमं राजानं पक्षिणाम् अभिषिञ्चाम इति। ततस्तेषां मतमुत्पन्नम्। उलूकोऽभिषिच्यतामिति। तस्य, यथाविधि, अभिषेकोचित-द्रव्यसंभारं कृत्वा, छत्र-चामर-व्यजन-सिंहासन-भद्रपीठादिना, अभिषेकः प्रारब्धः। अथ नभसा व्रजन्तम् अविज्ञातनामानं पक्षिणमपश्यन्। ते तु तं दृष्ट्वा स्तम्भिताभिषेकाः। अवश्यम्, अयमपि, समुदायेऽभ्यन्तरी कर्तव्यः। यत्कारणम्। महदिदं पार्थिवं राजकार्यम्। पृष्टश्चासौ, आगतः। 'भद्र! किं तवापि, एतद् अभिरुचितम् प्रजापालत्वम् दिवान्धस्य' इति। असावाह। 'किमन्ये पक्षिण उत्सादं गताः, हंस-कारण्डव चक्रवाक क्रौञ्च-मयूर-कोकिल-हारीत-जीवजीवकादयः, येनायम् अप्रसन्नदृष्टिः, उलूको राज्येऽभिषिच्यते।

स्वभावरौद्रमत्युग्रम्, क्षुद्रमप्रियवादिनम्।
उलूकमभिषिच्यध्वम्, न वः श्रेयो भविष्यति॥

क्षुद्रोऽयं दुरात्मा, न शक्तः प्रजाः पालयितुम्। सर्वथा नाश्रयणीय-गुणोपेतोऽयम्। तत्किमनेनेति'। तस्य तु तद्वचनमङ्गीकृत्य, साध्वनेनाभिहितमिति मत्वाब्रुवन्। 'पुनरेव समवायं कृत्वा, महद् राज्यकार्यं सं-प्र-धारयिष्यामः'। इत्युक्त्वा, यथागतं, सर्वे-पक्षिणो विचेरुः। केवलस्त्ववशिष्टो भद्रपीठगतोऽभिषेकाभिमुखो दिवान्धः समचिन्तयत्। 'केन च, इदमनर्थाय, अभिहितं, मम'। 'वायसेन' इत्युपलब्धवार्तं उलूको, वायसवचनेनादीपितमनाः, तमाह। येन भवता ममाभिषेक-व्याघातः कृतः, अद्यदिवसादारभ्य, अस्माकं भवतां च वैरम्। इत्यभिधाय समुज्झिताभिषेको दिवान्धो यथागतं प्रायात्।

न क्षुद्रो राज्यमर्हतीति साधूक्तम् ॥

---

## त्रिंशः पाठः ॥ ३० ॥

( पञ्चतन्त्रे — शिवि-कपोतयोः कथा )

अस्ति राजा शिविर्नामा परमकारुणिकः सकलार्थिजन-संपादित-मनोरथः। तस्य, अनन्यसदृशतया दानशीलतया, यश-स्त्रिदिवम् आरुरोह। अथ कदाचिद् आखण्डलश्चिन्तयामास। नास्ति दानशीलः शिविना तुल्यः। तत्कोऽस्याभिप्रायः, कियद् वा सत्त्वमस्य, इति जिज्ञासार्थं धर्ममाहूय, स्वयं कपोतोऽभवत्। धर्मश्च श्येनः, कपोतस्य पृष्ठतः, त्वरितगतिः, अभिभवितुं प्रवृत्तः।

अथ तस्य राज्ञः सुखासनस्थस्य, प्रभातसमय एव, असौ कपोतः कम्पमानो, भय-तरल-नेत्र-तारकः, करुणारसितम् आविष्कुर्वन्,

चरण-समीपे सहसैव संनिपतितः। प्रोवाच भय-गद्गदया गिरा। "राजन्! शरणागतोऽस्मि ते। परित्रायस्व मां श्येनात्"। अथ श्येनोऽपि राज्ञः पुरतः पपात। सोऽपि, 'राजन्! मुञ्च, मुञ्च, क्षुधातुरस्य मे भक्ष्यम् समर्पयस्वे' ति प्रोच्चैरुवाच। कपोत आह। 'देव! शरणागतस्य मे परित्राणमर्हसि। स्वशरीराण्यपि शरणागतार्थं त्यजन्तीति साधवो नित्यम्'। श्येनोऽब्रवीत्। 'राजन्! सकलमनोरथ-दाता किल श्रूयसे। अतो मे भक्ष्यमेनं दातुमर्हसि। प्राणसंशयमापन्नोऽस्मीति'।

असावपि राजा जातकारुण्यः, 'कथमेतद्' इति सम्भ्रान्तो दोलारूढ इव सान्त्वयन् श्येनमाह। नैष सतां पन्थाः—शरणागत-परित्यागः। तदहं मांसमन्यदेव दापयामि यावत् तृप्तिमवाप्नोषीति। श्येनोऽब्रवीत्। न वयं परहत-पिशितभुजः। स्वयं, जीवतो मांसानि. उष्णरुधिरकललानि. आस्वादयामहे। किंतु, यावन्मात्रम् इदं कपोतमांसं तुलितं भवति, तावन् मे स्वमांसं प्रयच्छस्वेति। 'बाढम्, दातास्मी' ति राज्ञि प्रतिपन्ने, हाहाकारः समभूद् भूभुजाम्—'देव! साहसं मा कार्षीः'। 'एष श्येनरूपी राक्षसः, त्वद्विनाशहेतुरागत' इति। एवमार्तनादे वर्तमाने, तुलां कपोतः समारोपितः। कक्षां तत्समां कृत्वा, स्वमांसम् अङ्गावयवाद् उत्कृत्य, आरोपितम्। न च कपोतसमं भवत्येव। अवशेषावयव-विलुप्त-पिशितः शिविः यदा कपोतस्य न तुल्यतां जगाम, तदा "नमः सर्वविदे धर्माय" इति कृत्वा स्वयमेव तुलामधिरूढः।

अथ दिवि, देवदुन्दुभयः प्रणेदुः। अविरल-कुसुम-वृष्टि-सारः समीरणः प्रववौ। 'साधु साधु' इति दशस्वपि दिक्षु वाचो विचेरुः। अत्रान्तरे, धर्म-पाकशासनौ प्रकटितरूपौ तं राजानम् आहतुः। 'साधु, महीनाथ! शोभनस्तेऽन्तिनिपुणः प्राणिधर्मो

विज्ञातः । परमार्थतस्त्वमेव जिज्ञासितः । तदिदं शरीरं ते पुरातनमिवास्तु । कोशमक्षयं, धर्मे च सदा मतिः, भूतभूतये भवतु । इत्युक्त्वा, अन्तर्धानम् आगतौ ॥

---

## एकत्रिंशः पाठः ॥ ३१ ॥

( पञ्चतन्त्रे—प्रकीर्णा नीतिश्लोकाः )

अनन्तपारं किल शब्दशास्त्रम्, स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु, हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥ १॥

महाजनस्य संपर्कः, कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं, धत्ते मुक्ताफलश्रियम् ॥ २ ॥

अपि संपूर्णतायुक्तैः, कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि, चन्द्रोदयमपेक्षते ॥ ३ ॥

बहूनामप्यसाराणां, समवायो हि दुर्जयः ।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बद्ध्यते ॥ ४ ॥

त्याज्यं न धैर्यं विधुरेऽपि दैवे,
धैर्यात् कदाचित् स्थितिमाप्नुयात् सः ।
याते समुद्रेऽपि हि पोतभङ्गे,
सांयात्रिको वाञ्छति तर्तुमेव ॥ ५ ॥

उपार्जितानामर्थानां, त्याग एव हि रक्षणम् ।
तडागोदर-संस्थानां, परीवाह इवाम्भसाम् ॥ ६ ॥

यो नात्मना न च परेण च बन्धुवर्गे,
दीने दयां न कुरुते न च भृत्यवर्गे ।
किं तस्य जीवितफलं हि मनुष्यलोके,
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ७ ॥

मृत्योर्बिभेषि किं बाल ! न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा, मृत्युर्वै प्राणिनां ध्रुवः ॥ ८ ॥

श्रूयतां धर्मसर्वस्वम्, श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि, परेषां न समाचरेत् ॥९॥

उपकारिषु यः साधुः, साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः, स साधुः सद्भिरुच्यते ॥१०॥



[ The Jātaka stories in Sanskrit are the work of Ārya Sūra. They are known as the birth-stories of Buddha in his previous lives known as Bodhi Sattva. The Bodhi Sattva is a name given to one who has a pure intellect free from selfish desires, and who stands ready for final enlightenment or *Nirvāṇa* of a Buddha. The Jātaka stories are originally pre-Buddhistic and belong to the ancient stock of religious legends of India. The Buddhistic writers gave the stories a Buddhistic touch and a supreme *moral tone* that is characteristic of Buddhism and is also recognized as the highest achievement of Indian Culture. The students who have read the previous lessons carefully are now well posted to grasp the language of the Jātakas simplified in the following lessons. They will be able to appreciate these attractive stories which I have taken special pains to make easier for them according to the required standard. ]

## द्वात्रिंशः पाठः ॥ ३२ ॥

### जातकमालायाम्—विश्वन्तर-जातकम् )

[ न महात्मनाम् चरितं सुखमनुमोदितुम् अल्पसत्त्वैः प्रागेवानुचरितुम् । तद् यथानुश्रूयते—]

सञ्जयो नाम शिबीनां राजा बभूव । तस्य विश्वन्तरो नाम पुत्रो युवराजो बभूव । असौ युवापि, वृद्धोपशमाभिरामः । तेजस्व्यपि,

क्षान्तिसुख-स्वभावः। विद्वानपि, ज्ञानमदानभिज्ञः। श्रिया समृद्धोऽपि, अवलेप शून्यः। स प्रत्यहम्, अभिगतम् अर्थिजनम्, अर्थ-विसर्गैः प्र-ह्लादयामास। अथ कदाचित्, तस्य, एवंविधम् दान-प्रसङ्गम् उपलभ्य, कश्चिद् अन्यतमो राजा, तस्य द्विरदस्यापहरणार्थं ब्राह्मणांस्तत्र प्र-णि-दधे। अथ ते ब्राह्मणा जयाशीर्वाद-मुखरा, विश्वन्तरस्य पुरस्तात् समतिष्ठन्त। सोऽपृच्छत्। आज्ञाप्यताम्। केनार्थ इति। ब्राह्मणा ऊचुः। तव द्विरदस्य गुणान् श्रुत्वा, वयम् अर्थित्वमायाताः। देहि नो गजम्। इत्युक्ते, विश्वन्तरः, प्रीत्या समापूर्यमाण-हृदयः, चिन्ताम् आपेदे। एवंविधेन दन्तिना, एषां ब्राह्मणानां कोऽर्थः? व्यक्तम्। अयं, लोभेर्ष्या-द्वेष-पर्याकुल-मनसः, कस्यापि राज्ञः, कार्पण्य-प्रयोगः। तस्य भूपतेः, आशा-विघात-दीनत्वं मा भूत्, इति विनिश्चित्य, स महात्मा, द्विरदवरात् त्वरितमवतीर्य, 'प्रतिगृह्यतामयम्' इत्युक्त्वा तेषां पुरस्ताद् अव-तस्थे। धर्मानुरागेण च, गजेन्द्रं दत्वा परां मुदम् अवाप। अथ द्विरदपति-प्रदान-श्रवणात्, शिवयो योधाः पौरमुख्याश्च, कोलाहलम् उपजनयन्तः, संजयं राजानमभिगम्य, सकोपमूचुः। किमियं, देव! राज्यश्रीर्विलुप्यमाना, एवमुपेक्ष्यते। नार्हति देवः स्वराज्यो-पप्लवम्, एवमभिवर्धमानम्, उपेक्षितुम्।

तच्छ्रुत्वा स राजा, कार्यानुरोधात्, शिवीन् उवाच। 'जाने दानप्रसङ्ग-व्यसनितां विश्वन्तरस्य। न चैष क्रमो राज्यधुरि संनियुक्तस्य। तथाहम् करिष्ये, यथा दाने मात्रां ज्ञास्यति विश्वन्तरः। तदलमत्र वः संरम्भेण' इति। शिवय ऊचुः। 'न खलु, महाराज! परिभाषामात्र-साध्योऽस्मिन्नर्थे विश्वंतर' इति। संजय उवाच। अथ किमन्यदत्र मया शक्यं कर्तुम्। निवारयिष्याम्यहम् अतो विश्वंतरमिति। अथ शिवयः समुदीर्ण-मन्यवो राजानमूचुः। राजन्!

धर्मात्मकस्ते सुतः, करुणा-मृदुत्वात् न राज्यभार-सहनशीलः। नय-निरपेक्षोऽयम्। राज्य-सिंहासनं नार्हति। धर्मानुरागात् तपोवनाध्यासन-योग्योऽयम्। तपसोऽभिवृद्धये तपोवनं प्रयातु। किं बहुना। शिबीनामेष निश्चयः।

अथ स राजा, प्रकृति-कोपाद्, अवनत-वदनः, पुत्रवियोग-चिन्ता-परिगतहृदयः, सायासम् अभिनिःश्वस्य शिबीनुवाच। यद्येष भवतां निर्बन्धः, तदेकमपि, अहोरात्रम्, अस्य मृष्यताम्। प्रभातायां रजन्याम्, अभिप्रेतं वोऽनुष्ठाता विश्वंतर इति। 'एवमस्तु' इति च प्रतिगृहीतानुनयः शिबिभिः, स राजा क्षत्तार-मुवाच। गच्छ, इमं वृत्तान्तं विश्वंतराय निवेदयेति। स तथेति प्रतिश्रुत्य, विश्वंतरम् स्वभवन-गतम् उपेत्य, शोक-दुःख-संवेगात् सस्वरं रुदन्, शनैरित्युवाच। नृप! कुपिताः शिबयः त्वां राष्ट्रात् प्रव्राजयन्ति। विश्वंतर उवाच। किं दुष्कृतं मया। कुत्र मे शिबयः कुद्धाः। क्षत्ता उवाच। अत्युदारतायाम्। अथ विश्वंतर उवाच। चपल-स्वभावाः खलु शिबयः। अनभिज्ञाश्चास्मत्स्वभावस्य। लोकार्थम्, अहं स्वे नयने शिरो वा दद्याम्।

कामं मां शिबयः सर्वे, घ्नन्तु प्रव्राजयन्तु वा।
नत्वेवाहं न दास्यामि, गच्छाम्येष तपोवनम्॥

अथ पत्नीमुवाच। श्रुतोऽत्रभवत्या शिबीनां निश्चयः। मद्री उवाच। श्रुतोऽयं देवः। विश्वंतर उवाच। यत् ते पैतृकं धनम्, यच्च अन्यतोऽधिगतम्, तत् त्वं निधेहि। मद्री उवाच। कुत्र एतद्, देव! निदधामि। विश्वंतर उवाच। सदा शीलवद्भ्यो दानं दद्याः। तथाहि निहितं द्रव्यं सुनिहितं भवति। श्वशुर्योः प्रियं

कुर्याः। पुत्रयोः परिपालनं कुरु। मद्विरहात् तु शोकं मा कुरु। तच्छ्रुत्वा मद्री शोक-संतप्त-हृदयापि सदैन्यमित्युवाच—

नैष धर्मो महाराज, यद्, याया वनमेककः।
तेनाहमपि यास्यामि, येन क्षत्रिय यास्यसि ॥

नैव च खलु मे वनवासे दुःख इति प्रतिभाति। इत्यनुनीयमानः स दयितया, वनप्रयाण-पर्युत्सुकमतिः, अर्थिजनापेक्षया महादानं दातुमुपचक्रमे। अथेमां विश्वंतर-प्रव्राजन-प्रवृत्तिम् उपलभ्य, राजकुले तुमुल आक्रन्द-शब्दः प्रादुरभूत। अथ विश्वंतरः शोक-दुःखाभिभूत-धैर्ययोः मातापित्रोश्चरणान् अभिप्रणम्य, सपुत्रदारः, स्यन्दनमभिरुह्य पुरान्निरगच्छत्। अथैनं, यदृच्छयाभिगता ब्राह्मणा, रथवाहांस्तुरगान् अयाचन्त। अपरो ब्राह्मणः समभिगम्य रथमयाचत। अथ विश्वंतरः प्रीतमनाः, रथादवतार्य स्वजनान् निर्यात्य रथं रथवाहांश्च ब्राह्मणेभ्यः, जालिनं कुमारमङ्केनादाय, पद्भ्यामेवाध्वानं प्रत्यपद्यत। अविमनस्कैव च मद्री कृष्णाजिनां कुमारीम्, अङ्केनादाय, पृष्ठतोऽन्वगच्छदेनम्। तथा च गच्छन् सपुत्रदारो विश्वंतरः वङ्क-पर्वतम् आरुह्य, तत्र च तपोवनं प्रविश्य, प्रविविक्तां पर्णशालाम् अध्यावसत्।

अथ कदाचिन् मूलफलार्थं गतायां राजपुत्र्याम्, परिपालन-निमित्तम् आश्रमपदम् अशून्यं कुर्वाणे राजपुत्रे, कश्चिद् ब्राह्मणस्तं देशम् उपाजगाम। अथ स ब्राह्मणो राजपुत्रमुवाच। 'प्रयच्छ मे तव सुतौ'। इत्युक्ते 'ददामि' इत्यवदत् विश्वंतरः। ब्राह्मणो ब्रूते। स्वस्त्यस्तु ते। तत् किमिदानीमास्यते। इत्यभिहितो विश्वंतर उवाच। एतौ सुतौ मया तुभ्यं दत्तौ। किन्तु अनयोर्माता वनं गता। सायम् आगमिष्यति। तया दृष्टौ, श्वो, मम सुतौ नेतासि।

धर्मात्मकस्ते सुतः, करुणा-मृदुत्वात् न राज्यभार-सहनशीलः । नय-निरपेक्षोऽयम् । राज्य-सिंहासनं नार्हति । धर्मानुरागात् तपोवनाध्यासन-योग्योऽयम् । तपसोऽभिवृद्धये तपोवनं प्रयातु । किं बहुना । शिवीनामेष निश्चयः ।

अथ स राजा, प्रकृति-कोपाद्, अवनत-वदनः, पुत्रवियोग-चिन्ता-परिगतहृदयः, सायासम् अभिनिःश्वस्य शिवीनुवाच । यद्येष भवतां निर्बन्धः, तदेकमपि, अहोरात्रम्, अस्य मृष्यताम् । प्रभातायां रजन्याम्, अभिप्रेतं वोऽनुष्ठाता विश्वंतर इति । 'एवमस्तु' इति च प्रतिगृहीतानुनयः शिविभिः, स राजा क्षत्तार-मुवाच । गच्छ, इमं वृत्तान्तं विश्वंतराय निवेदयेति । स तथेति प्रतिश्रुत्य, विश्वंतरम् स्वभवन-गतम् उपेत्य, शोक-दुःख-संवेगात् सस्वरं रुदन्, शनैरिदमुवाच । नृप ! कुपिताः शिवयः त्वां राष्ट्रात् प्रव्राजयन्ति । विश्वंतर उवाच । किं दुष्कृतं मया । कुत्र मे शिवयः कुद्धाः । क्षत्ता उवाच । अत्युदारतायाम् । अथ विश्वंतर उवाच । चपल-व्यवसायाः ननु शिवयः । अनभिज्ञाश्चासत्स्वभावस्य । लोकार्थम्, अहं स्वे नयने शिरो वा दद्याम् ।

कामं मां शिवयः सर्वे, घ्नन्तु प्रव्राजयन्तु वा ।
नत्वेवाहं न दास्यामि, गच्छाम्येष तपोवनम् ॥

अथ पत्नीमुवाच । श्रुतोऽत्रभवत्या शिवीनां निश्चयः । मद्री उवाच । श्रुतोऽयं देव । विश्वंतर उवाच । यत् ते पैतृकं धनम्, मम, अन्यतोऽधिगतम्, तत् त्वं निधेहि । मद्री उवाच । कुत्र खलु, देव ! निधास्यामि । विश्वंतर उवाच । सदा शीलवद्भ्यो दानं दद्याः । तथाहि निहितं द्रव्यं सुनिहितं भवति । श्वशुरयोः प्रियं

कुर्याः । पुत्रयोः परिपालनं कुरु । मद्विरहात् तु शोकं मा कुरु । तच्छ्रुत्वा मद्री शोक-संतप्त-हृदयापि सदैन्यमित्युवाच—

नैष धर्मो महाराज, यद्, याया वनमेककः ।
तेनाहमपि यास्यामि, येन क्षत्रिय यास्यसि ॥

नैव च खलु मे वनवासे दुःख इति प्रतिभाति । इत्यनुनीयमानः स दयितया, वनप्रयाण-पर्युत्सुकमतिः, अर्थिजनापेक्षया महादानं दातुमुपचक्रमे । अथेमां विश्वंतर-प्रव्राजन-प्रवृत्तिम् उपलभ्य, राजकुले तुमुल आक्रन्द-शब्दः प्रादुरभूत । अथ विश्वंतरः शोक-दुःखाभिभूत-धैर्ययोः मातापित्रोश्चरणान् अभिप्रणम्य, सपुत्रदारः, स्यन्दनमभिरुह्य पुरान्निरगच्छत् । अथैनं, यदृच्छयाभिगता ब्राह्मणा, रथवाहांस्तुरगान् अयाचन्त । अपरो ब्राह्मणः समभिगम्य रथमयाचत । अथ विश्वंतरः प्रीतमनाः, रथादवतार्य स्वजनान् निर्यात्य रथं रथवाहांश्च ब्राह्मणेभ्यः, जालिनं कुमारमङ्केनादाय, पद्भ्यामेवाध्वानं प्रत्यपद्यत । अविमनस्कैव च मद्री कृष्णाजिनां कुमारीम्, अङ्केनादाय, पृष्ठतोऽन्वगच्छदेनम् । तथा च गच्छन् सपुत्रदारो विश्वंतरः वङ्क-पर्वतम् आरुह्य, तत्र च तपोवनं प्रविश्य, प्रविविक्तां पर्णशालाम् अध्यावसत् ।

अथ कदाचिन् मूलफलार्थं गतायां राजपुत्र्याम्, परिपालन-निमित्तम् आश्रमपदम् अशून्यं कुर्वाणे राजपुत्रे, कश्चिद् ब्राह्मणस्तं देशम् उपाजगाम । अथ स ब्राह्मणो राजपुत्रमुवाच । 'प्रयच्छ मे तव सुतौ' । इत्युक्ते 'ददामि' इत्यवदत् विश्वंतरः । ब्राह्मणो ब्रूते । स्वस्त्यस्तु ते । तत् किमिदानीमास्यते । इत्यभिहितो विश्वंतर उवाच । एतौ सुतौ मया तुभ्यं दत्तौ । किन्तु अनयोर्माता वनं गता । सायम् आगमिष्यति । तया दृष्टौ, श्वो, मम सुतौ नेतासि ।

ब्राह्मण उवाच। अलमनेनात्रभवतो निर्बन्धेन। 'निर्गम्यताम्' इत्यादिकर्कशेन वचसा, कुमारौ आश्रमपदान्निष्कामयितुम् आरेभे। अथ कुमारौ पितरमभिप्रणम्य बाष्पोपरुध्यमान-नयनौ ऊचतुः—

अम्बा च तात! निष्क्रान्ता, त्वं च नौ दातुमिच्छसि।
यावत् तामपि पश्यावस्ततो दास्यति नौ भवान्॥

अथ स ब्राह्मणः, पुरा माता अनयोरागच्छति, अस्य वा पुत्र-स्नेहात् पश्चात्तापः संभवतीति विचिन्त्य, अनयोर्हस्तानाबध्य, लतया संतर्जयन्, पितरं प्रति व्यावर्तित-वदनौ प्रकृति-सुकुमारौ कुमारौ प्रचकर्ष। अथ कृष्णाजिना कुमारी सस्वरं रुदती पितरमुवाच। तात! अयं निर्दयो लतया मां हन्ति। अथ जाली कुमारो मातरम् अनुशोचयन् आह। इदं मे तथा दुःखं न, यदयं मां हन्ति, यत्तु अद्य, अम्बां नापश्यम्, तन्मां विदारयतीव। इत्युक्त्वा जग्मतुः।

अथ मद्री मूल-फलानि, आदाय, आश्रमपदमुपाजगाम। अथानुप्रविश्याश्रमपदम्, एकान्ते निक्षिप्य मूल-फलम्, यथोपचार-पुरःसरम्, भर्तारमभिगम्य, 'क्व दारकौ' इति पप्रच्छ। अथ विश्वन्तरः, जानानः स्नेहदुर्बलतां मातृहृदयस्य, दुर्निवेद्यत्वाच्च विप्रियस्य, नैनां किञ्चिद् वक्तुं शशाक। अथ मद्री सबाष्पगद्गदं पुनरुवाच—

दारकौ न च पश्यामि, त्वं च मां नाभिभाषसे।
हता खल्वहं कृपणा, विप्रियं हि न कथ्यते॥

इत्युक्त्वा शोकाग्निना परिदह्यमान-हृदया, छिन्नमूलेव लता निपपात। पतन्तीमेव चैनां परिगृह्य विश्वन्तरः, तृण-शयनम्

आनीय, शीताभिरद्भिः परिषिच्य, प्रत्यागत-प्राणाम् समाश्वासय-न्नुवाच—

जरा-दारिद्र्य-दुःखार्तो, ब्राह्मणो मामुपागमत् ।
तस्मै दत्तौ मया पुत्रौ, समाश्वसिहि मा शुचः ॥
याचितेन कथं शक्यं, न दातुमपि जीवितम् ।
अनुमोदस्व तद् भद्रे ! पुत्रदानमिदं मम ॥

तच्छ्रुत्वा मद्री, भर्तुः, अधृति-परिहारार्थं, प्रमृज्य नयने, सविस्मयम् उदीक्षमाणा भर्तारमुवाच । आश्चर्यमाश्चर्यम् !!

अथ शक्रो देवेन्द्रः, विश्वंतर-पुत्रदान-वृत्तान्तम् उपलभ्य, प्रभातायां तस्यां रजन्याम्, ब्राह्मणरूपी, विश्वंतरम् अर्थिवद् अभ्यगच्छत् । कृतातिथि-सत्कारश्च देवेन्द्रो भार्याम् एनम् अयाचत । विश्वंतरस्तथेति प्रतिशुश्राव । ततः स वामेन करेण मद्रीम् आदाय, सव्येन च कमण्डलुमानीय तस्य जलं कराग्रे न्यपातयत् ।

चुकोप मद्री न तु नो रुरोद, विवेद सा तस्य हितं स्वभावम् ।
अपूर्व-दुःखातिभरातुरा तु, तं प्रेक्षमाणा लिखितेव तस्थौ ॥

तद् दृष्ट्वा, परम-विस्मयाक्रान्त-हृदयः शक्रः, स्वं वपुरास्थाय, महासत्वं विश्वंतरम् अभिष्टुवन् उवाच—

तुभ्यमेव प्रयच्छामि, मद्रीं भार्यामिमामहम् ।
व्यतीत्य नहि शीतांशुं, चन्द्रिका स्थातुमर्हति ॥

अथ शिवयः, संजयश्च शिविराजः, तदतिकरुणम्, अतिदुष्करं च विश्वंतरस्य कर्म श्रुत्वा, समाक्लेदितहृदया, ब्राह्मणहस्ता-न्निष्क्रीय तनयौ, प्रसाद्यानीय च विश्वंतरम्, राज्ये प्रति-ष्ठापयामासुः ॥

---

## त्रयस्त्रिंशः पाठः ॥ ३३ ॥

( जातकमालायाम्—कुम्भ-जातकम् )

[ अनेकदोषोपसृष्टम्, अतिकष्टं मद्यपानम् इति साधवः परमपि अस्माद् वारयन्ति प्रागेवात्मानमिति । तद्यथानुश्रूयते—]

'बोधिसत्त्वः' किल कदाचित्, मैत्र-स्निग्धेन चक्षुषा, ददर्श सर्वमित्रं नाम राजानम्, स-पौरजानपदम्, मद्यपान-प्रसङ्गाभिमुखम् । तत्र च, मद्यपानस्य महादोषताम् अवेत्य स महात्मा, महत्या करुणया, समापीड्यमान-हृदयः, चिन्ताम् आपेदे । कष्टा, बत, इयम् आपद् आपतिता लोकस्य । तत्किमत्र प्राप्तकालं स्यात् । भवतु दृष्टम् ।

प्रधानभूतस्य विचेष्टितानि, जनोऽनुकर्तुं नियतस्वभावः ।
इत्यत्र राजैव चिकित्सनीयः, शुभाशुभं तत्प्रभवं हि लोके ॥

इति विनिश्चित्य स महात्मा, सुरा-पूर्णं कुम्भम् समानीय, सर्वमित्रस्य राज्ञः परिषदि समागम्य, गम्भीरमभिनदन्, उच्चैरुवाच । 'कः क्रेतुम् इच्छति कुम्भम् । इतो घटं क्रेतुं वाञ्छेत्, येनास्ति भयं परलोक-दुःखाद्, दृष्टेव व्यसनागमाद् वा' । घोषयामास । अपूर्वः खल्वयम् क्रयणो विक्रयारम्भः । गुण-संवर्णनम्, दोषाणां च निगूहनम्, इति प्रसिद्धो लोकस्य पण्यानां विक्रयक्रमः । नायं विधिः । नास्तिक्यमनुगतम् । नहि कृच्छ्रेऽपि संत्यक्तुं सत्यमिच्छन्ति साधवः । तद् आचक्ष्व ।

महाभाग ! कस्य पूर्णोऽयं घटः। किं वा विनिमये प्राप्यम् अस्मत्तः। बोधिसत्व उवाच। श्रूयतां महाराज ! अयं घटः पूर्णः, न तीर्थाम्भसः। न सर्पिर्विशेषस्य। न च क्षीरस्य। यस्य पापमयस्य पूर्णोऽयं घटः, तस्य प्रभावं शृणु। यत्पीत्वा भवति मन्दस्मृतिः, यत्पीत्वा धर्माधर्म-विचाररहितो जायते, तदत्र कुम्भे निहितम्। यया संहतमतिः, गौरिव जडो भवति, यया चात्मलज्जाम् उचितामपि जहाति, सेयं कुम्भे निहिता क्रयार्हा। यत्पीत्वा, श्वभिः अवलिह्यमान-वक्त्राः, निःसंज्ञाः स्वपन्ति राजमार्गेषु, तत् क्रय-सुभगम् अत्र कुम्भे प्रक्षिप्तम्। यदुपयुज्य, मद-बलाद्, अबला पतिं न गणयेत्, तदिदं घटे निहितम्। यां पीतवन्तो यादवाः, विस्मृत्य बन्धुभावम्, परस्परं गदाभिरताडयन्, उन्मादनी सा, इह कुम्भे निहिता। या वित्तवतां कुलानाम् उच्छेदनी, सेयं घटे विद्यमाना। यत् परिभव-भवनम् तदिदं क्रय-पथेन गतम् इह घटे।

ब्रूयादसत्यमपि, सत्यमिव प्रतीतः,
कुर्यादकार्यमपि, कार्यमिव प्रहृष्टः।
यस्या गुणेन सदसत् सदसच्च विद्यात्,
शापस्य मूर्तिरिव सा निहितेह कुम्भे ॥

उन्माद-विद्यां व्यसन-प्रतिष्ठाम्,
साक्षादलक्ष्मीं, जननीमघानाम्।
अद्वैतसिद्धां कलिपद्धतिं ताम्,
क्रीणीत घोरां मनसस्तमिस्राम् ॥

यया परिमुषित-मतिः, पितरं जननीं वा निहन्यात्, ताम् इतः, क्रयविधिना गृहाण। इदं मद्यं लोके 'सुरा' इति प्रथितम्। यस्य गुणेषु पक्षपातो नास्ति, स इदं क्रेतुम् उद्योगं करोतु।

शीलं निमीलयति, हन्ति यशः प्रसह्य,
लज्जां निरस्यति, मतिं मलिनीकरोति।
यन्नाम पीतमुपहन्ति गुणांश्च तांस्तान्,
तत्पातुमर्हसि कथं नृप मद्यम्, अद्य ॥

अथ स राजा तैस्तस्य हृदय-ग्राहकैर्हेतुमद्भिर्वचोभिः, अवगमित-मद्यपान-दोषः, मद्यप्रसङ्गाद् अपवृत्ताभिलाषः, बोधिसत्वम् इत्युवाच। यत् त्वया हितकाम्यया मे स्वभिहितम्, तत्कर्मणा विधिवदर्चयितुम् अहं यतिष्ये। इदं च तावत् सुभाषित-प्रतिपूजनं प्रतिग्रहीतुम् अर्हति भवान्। ददामि ते पञ्च ग्रामवरान्, दश रथान्, दासी शतम्, पञ्चशतानि च गवाम्। हितस्य वक्ता त्वं मम गुरुरसि। यद् वा मया, अन्यत् करणीयम्, तत्संदेशाद् अर्हत्यत्रभवान् भूयोऽपि माम् अनुग्रहीतुम्। बोधिसत्व उवाच। राजन्! ग्रामवरादिना ममार्थो नास्ति। हितस्य वक्ता तु वाक्प्रग्रहेण संपूजनीयः।

अयं हि पन्था यशसः श्रियश्च,
परत्र सौख्यस्य च तस्य तस्य।
अपास्य तस्मान्मदिरा-प्रसङ्गम्,
धर्माश्रयात् सर्वसुखं भजस्व ॥

इत्युक्तः स राजा, सपौरजानपदो, मद्यपानाद् विरराम ॥

---

# चतुस्त्रिंशः पाठः ॥ ३४ ॥

## ( जातकमालायाम्—सुतसोम-जातकम् )

[ श्रेयः समाधत्ते, यथातथाप्युपनतः सत्सङ्गमः । श्रेयोऽर्थिना, सज्जन-समाश्रयेण भवितव्यम् । तद्यथानुश्रूयते— ]

बोधिसत्वः किलायं भगवान्, श्रीमति कौरव्य-राजकुले जन्म प्रति-लेभे । तस्य सोम-प्रियदर्शनस्य सुतस्य, सुतसोम इत्येवं पिता नाम चक्रे । स शुक्लपक्ष-चन्द्रमा इव, प्रतिदिनम्, अभिवर्धमान-कान्तिः, कालक्रमाद्, वेदेषु वैचक्षण्यम् अवाप्य, परिपालन-नियमाद् बन्धुरिव गुणानां बभूव । अतश्चैनं राजा, लोक-परिपालन-सामर्थ्याद् यौवराज्य-विभूत्या संयोजयामास ।

अथ कदाचित् स महात्मा, नगरोपवनानि अनुविचरन्, अन्यतमम् उद्यानवनम्, क्रीडार्थम् उपनिर्जगाम । तत्रस्थं चैनम्, अन्यतमः 'सुभाषिताख्यायी' ब्राह्मणः समभि-जगाम । तदागमनाद् उत्पन्न-बहुमानः स राजपुत्रः, यावन्न शृणोति सुभाषितानि ब्राह्मणस्य, सहसैव तावत्, उत्पतितं कोलाहलमुपश्रुत्य, आह । ज्ञायताम् । किमेतदिति । अथास्य दौवारिकाः, ससंभ्रमम् द्रुततरम् उपेत्य, न्यवेदयन्त । देव ! एष स पुरुषादः, 'कल्माष-पादः सौदासः', साक्षादिवान्तकः, जगत्-संत्रास इत एवा-भिवर्तते । तद्भयाद् विद्रुतमस्माकं बलम् । यतः, प्रतियत्नो भवतु देवः । प्राप्तकालं वा संप्रधार्यताम् । अथ सुतसोमः तानुवाच । भोः ! क एष सौदासो नाम । ते तं प्रोचुः । किमेतद् देवस्य न विदितम् यथा सुदासो नाम राजा बभूव । तस्य

समीपे समानीतः कश्चित् कुमारः, वने जातः, वनचरैर्गृहीतश्च। अपुत्रोऽहमिति च कृत्वा सुदासेन संवर्धितः। पितरि तु सुरपुरम् उपगते, स्वं राज्यं प्राप्तवान्। स वनेचरत्वाद् आमिषेषु अभिसक्तः। इदमिदं रसवरं मांसमिति, स मानुषं मांसम् आस्वाद्य, स्वपौरानेव च हत्वा हत्वा भक्षयितुम् उपचक्रमे। अथ पौराः, तद्वधाय उद्योगं चक्रुः। यतोऽसौ भीतः सौदासो, नर-रुधिर-पिशित-बलिभुग्भ्यो भूतेभ्य उपशुश्राव—'अस्मात् संकटान् मुक्तोऽहं, राज्ञां कुमारशतेन भूतयज्ञं करिष्यामीति'। सोऽयं तस्मात् संकटान्मुक्तः। प्रसह्य प्रसह्य चानेन राजकुमारापहरणं कृतम्। सोऽयं, देवमपि, अपहर्तुम् आयातः। श्रुत्वा देवः प्रमाणमिति।

अथ स बोधिसत्वः कारुण्यादित्युवाच। युक्तं मया आतिथ्यम् अस्य कर्तुम्। दृष्ट्वैव सौदासं समाजुहाव। रे! अयमहम् सुतसोमः। इत एव निवर्तस्व। किमनेन कृपणजन-कदनकरण-प्रसङ्गेन। तत्-समाह्वान-शब्दम् आकर्ण्य, सौदासः सिंह इव ततो न्यवर्तत। वीक्ष्य च बोधिसत्वमुवाच। अहमपि त्वामेव मृगयामि। इत्युक्त्वा निर्विशङ्कः, द्रुततरम् अभिसृत्य, एनम् स्कन्धमारोप्य प्रदुद्राव। स्वम् आवास-दुर्गं च प्रविवेश।

अथ बोधिसत्वस्य चिन्ता प्रादुरभूत्। उपायनार्थम् दूरमागतः स सुभाषिताख्यायी ब्राह्मणः किं नु करिष्यति। आशा-विघातः तस्य संजातः। इति विचिन्तयतः, तस्य महासत्वस्य, कारुण्य-परिचयाद्, अश्रूणि प्रावर्तन्त। अथ सौदासः, बोधिसत्वं साश्रुनयनम् अभिवीक्ष्य, प्रहसन्नुवाच। मा तावद् भोः!, धीर इत्यसि विख्यातः। त्वमपि अश्रूणि मुञ्चसि। बोधिसत्व उवाच। नैश्वर्यसुखानि संस्मृतवतो ममायं बाष्पोद्गमः। आशावान् स

ब्राह्मण, नैराश्येन दह्यते, इति स्मृत्वा सास्त्रेक्षणोऽस्मि संजातः। तस्मान्मां विसर्जयितुमर्हसि, यावदहम् अस्य द्विजस्य हृदयं सम्माननात् संतुष्टं करोमि। एवं द्विजस्य आनृण्यं प्राप्य, भूयस्तवापि अनृणतां गन्तास्मि। 'अपयात-व्यनयोऽयमस्य' इतीयं शङ्का न कर्तव्या। अन्यो हि मार्गो मम। अन्यश्चान्य-जनानाम्। सौदास उवाच। यदुक्तं त्वया तन्न श्रद्धेयम्। मृत्योर्वदनाद् विमुक्तः, कः पुनस्तद् अभ्युपेयात्। बोधिसत्व उवाच। ननु मया प्रतिपन्नम्, आगमिष्यामीति। तद् अलं मां खलजन-समतया एवं परिशङ्कितुम्। सुतसोमः खल्वहम्।

लोभेन मृत्योश्च भयेन सत्यम्,
सत्यम् यदेके तृणवत् त्यजन्ति।

सतां तु सत्यं वसु जीवितं च,
कृच्छ्रेऽप्यतस्तन्न परित्यजन्ति॥

अथ सौदासश्चिन्तामापेदे। सुष्ठु खल्वयं सत्यवादितया च धार्मिकतया च विकत्थते। तत्पश्यामि तावदस्य सत्यानुरागं धर्मप्रियतां च। किं च तावन्ममानेन नष्टेनापि स्यात्। अस्ति हि मे स्वभुजवीर्य-प्रतापाद् वशीकृतं शतमात्रं क्षत्रिय-कुमाराणाम्। तैर्यथोपयाचितं भूतयज्ञं करिष्यामीति विचिन्त्य, बोधिसत्व-मुवाच। तेन हि गच्छ। द्रक्ष्यामः ते सत्यप्रतिज्ञतां धार्मिकतां च। तस्य द्विजस्य यदीप्सितं तत् कृत्वा शीघ्रम् आयाहि। यावत् ते चितां सज्जीकरोमि।

अथ बोधिसत्व: तथेत्यस्मै प्रतिश्रुत्य स्वभवनम् अभिगत:। प्रतिनन्द्यमान: स्वेन जनेन, तमाहूय ब्राह्मणं, तस्माद् गाथा-चतुष्टयं शुश्राव। तच्छ्रुत्वा स महासत्व:, समभिलषितेनार्थेन, ब्राह्मणंप्रति-पूजयामास। अथैनं, तस्य पिता, अतिव्यय-निवारणोद्यत-मति:, सानुनयम् इत्युवाच। तात! सुभाषित-प्रतिपूजने साधुमात्रां ज्ञातुमर्हसि। महाजन: खलु ते भर्तव्य:। अतिप्रदातु:, धनेश्वरस्यापि, कियच्चिरं, धनेश्वरद्युतिर्भवेत्। बोधिसत्व उवाच। देव! सुभाषितानाम् अर्घप्रमाणं कर्तुम्, यदि शक्यं भवेत्, तर्हि, राज्यमपि तन्निष्क्रयं न। यच्छ्रुत्वा मन: प्रसादं याति, श्रेयोऽ-नुराग: स्थिरतां प्राप्नोति, प्रज्ञा च वर्धते, ननु तत् स्वमांसैरपि क्रय्यं स्यात्। उक्तं च—

दीप: श्रुतं, मोह-तम:-प्रमाथी; चौराद्यहार्यं परमं धनं च।
संमोह-शत्रु-व्यथनाय शस्त्रम्; नयोपदेष्टा परमश्च मन्त्री॥
आपद्गतस्याप्यविकारि मित्रम्; अपीडना शोकरुजश्चिकित्सा।
बलं महद्, दोष-बलावमर्दि; परं निधानं यशस: श्रियश्च॥

अस्माद् ब्राह्मणात् श्रुतं प्राप्तवानहम्। कथं नाम न तं पूज-येयम्। कथं वा तवाज्ञां लङ्घयेयम्। अस्मात्, सौदास-समी-पम् यास्यामि। अर्थो न मे तवानेन राज्येन।

अथैनं पिता स्नेहात् सादरमुवाच। तात! तवैव हितावेक्षिणा मया एवम् अभिहितम्। तदलम् अत्र ते मन्युवशम् अनुभवितुम्। द्विषन्तस्ते सौदासवशं गमिष्यन्ति। अथापि, प्रतिज्ञातं त्वया तत्समीप-गमनम्। अत: सत्यानुरक्षी तत्संपादयितुमिच्छामि। तदपि तेनाहम् अनुज्ञास्यामि। अपातकं

हि स्वप्राण-परिरक्षा-निमित्तम्, अनृतमार्गः । तत्परिहार-श्रमेण तव कोऽर्थः । अर्थकामाभ्यां च विरोधिदृष्टं धर्मसंश्रयम्, अनयम् इति वदन्ति नीतिकुशलाः । तदलम् अनेन, अस्मन्मनस्तापिना, स्वार्थनिरपेक्षेण ते निर्बन्धेन । अथापि, मार्ष ! अयशस्यं धर्मविरोधि चेति प्रतिज्ञा-विसंवादनम्, अनुचितत्वात्, न व्यवस्यति ते मतिः । एवमपीदं, त्वद्विमोक्षणार्थम् समुद्युक्तम् । सज्जमेव नो महद्बलम् । तदनेन परिवृतः समभिगम्य, एनम् वशम् आनय । अन्तक-वशं वा प्रापय । एवम् अभ्यर्थ-प्रतिज्ञता संपादिता स्यात्, आत्मरक्षा चेति ।

बोधिसत्व उवाच । देव ! नोत्सहे, अन्यथा प्रतिज्ञातुम् अन्यथा कर्तुम् । शोच्येषु वा व्यसन-पङ्क-निमग्नेषु नरकाभिमुखेषु सुहृत्सु, स्वजन-परित्यक्तेषु, अनाथेषु च तद्विधेषु प्रहर्तुम् । अपि च । असौ पुरुषादः, मयि दुष्करम् उदारं चाकरोत् । मद्वचः प्रत्ययात्, व्यसृजत् माम् वशमागतम् । तत्कारणात् मया सुभाषितं लब्धम् । उपकारी विशेषेण सः । यतो मया अनुकम्प्यः । अलं चात्र देवस्य मदत्यया शङ्कया । का हि तस्य शक्तिरस्ति मामेवमभिगतं विहिंसितुमिति । एवमनुनीय स महात्मा पितरं विनिवारण-सोद्यमं, विनिवर्त्य च प्रणयि-जनम्, एकाकी विगत-भय-दैन्यः, सत्यानुरक्षी, लोकहितार्थं, सौदासम् अभिविनेष्यन्, तन्निकेतनम् अभिजगाम । दूरादेवावलोक्य सौदासः तं महासत्वम्, चिन्ताम् आपेदे । अहहह ! आश्चर्याणाम् आश्चर्यम् !! अद्भुतानामद्भुतम् । अस्य नरस्य सत्यौदार्यम् अतिमानुष-दैवतम् । अहो धैर्यम् । साधु सत्यता । यत् स्वयमुपेतोऽयम् विनीत-भयसंभ्रमः, मां मृत्यु-रौद्रस्वभावम् इति ।

स्थाने खल्वस्य विख्यातम्, सत्यवादितया यशः ।
इति प्राणान् स्वराज्यं च, सत्यार्थे योऽयमत्यजत् ॥

अथ बोधिसत्वः समभिगम्यैनम् उवाच । प्राप्तं सुभाषित-धनम् । अर्थी प्रतिपूजितः । भवतः प्रभावाच्च मनः प्रीतिं गमितम् । प्राप्तोऽहमधुना । यथेप्सितं माम् अशान । यज्ञाय वा मम पशु-व्रतम् आदिश । सौदास उवाच । त्वां विधूम-पक्वं खादितुं मम कालो नात्येति । धूमाकुला तावदियं चिता । तदेतानि सुभाषितानि शृणमः । बोधिसत्व उवाच । कस्तवार्थः, इत्थं गतस्य, सुभाषितश्रवणेन । उदरस्य हेतोः त्वमिमाम् अवस्थां प्राप्तोऽसि । प्रजासु संत्यक्त-घृणस्त्वम् । इमा गाथास्तु धर्मं प्रवदन्ति । तव सत्यं नास्ति । कुतो धर्मः । किं श्रुतेन करिष्यसि ।

अथ सौदासः, ताम् अवसादनाम् अमृष्यमाणः, प्रत्युवाच । मा तावद् भोः !, कथय । कोऽसौ नृपो यः क्रीडावने वनमृगान् न निहन्ति । तद्वद् अहमपि, वृत्तिहेतोः, मनुजान् यदि निहन्मि, तत्र को दोषः । बोधिसत्व उवाच । तेऽपि खलु धर्मे न स्थिताः । नराशनस्तु तेभ्योऽपि निन्द्यतमः । जात्युच्छ्रिता हि पुरुषाः, न भक्षणीयाः । अथ सौदासः, तद्वचनम् अभिहसन्नुवाच । भोः सुतसोम ! यत् त्वं मत्समीपम् पुनरागतः, तस्मात् नीतिमार्गे न कुशलोऽसि । बोधिसत्व उवाच । नैतदस्ति । कुशलोऽहं नीतौ । यद् अनृतं त्यक्त्वा सत्ये अभिरतोऽस्मि । सौदास उवाच । मनोहराणि सुखानि हित्वा, सत्यवाक्ये काम् अर्थसिद्धिं त्वमनुपश्यसि, यद्रक्षणार्थं मामुपगतोऽसि । बोधिसत्व उवाच । बहवः सत्यवचनाश्रया गुणातिशयाः । संक्षेपस्तु श्रूयताम् । सर्वान् रसान्, स्वादुतया, अतिशेते सत्यम् । सुरालयस्य

प्रवेशाय द्वारम् सत्यम् । संसार-दुर्गोत्तरणाय सेतुः सत्यम् । त्रिलोकाक्रमणाय मार्गः सत्यम् ।

अथ सौदासः 'साधु, युक्तम्' इत्यभिप्रणम्य एनम्, सविस्मयम् अभिवीक्षमाणः पुनरुवाच । अन्ये नरा मद्वशमागता, विलुप्तधैर्या भवन्ति । त्वं तु न धैर्य-लक्ष्म्या संत्यज्यसे । मन्ये, मृत्युभयं तव नास्ति । बोधिसत्व उवाच । महतापि प्रयत्नेन यदतिवर्तितुम् न शक्यम्, तत्र भय-क्लैव्येन किम् ? कापुरुषास्तु शुभेषु कर्मसु अकृतश्रमा मृत्युभयात् जडा भवन्ति । धर्मस्थितः को मरणाद् विभीयात् ! मृत्योर्न मे भयम् । अतो मां भुङ्क्ष्व । यज्ञाय वा समुपकल्पय । तदुपश्रुत्य सौदासः प्रसादाश्रु-व्याप्तनयनः, विस्मृत-पापस्वभावः, सबहुमानम् अवेक्ष्य, बोधिसत्त्वमुवाच । शान्तं पापम् ! शान्तं पापम् ! तस्य मूर्धा शतधा यायात् यस्त्वद्विधस्य पापमिच्छेत् । तदर्हति भवान् तान्यपि मे सुभाषितानि वक्तुम् । तेषु मे कौतूहलम् । धर्म-दर्पणे निजचरित-च्छाया-वैरूप्यं दृष्ट्वा, आवेगेन सह, धर्मोत्सुकं जातं मे मनः ।

(अथैनं पात्रीकृताशयं बोधिसत्व उवाच । धर्मं सत्कृत्य शृणुयाद्, आतुरो भिषग्वाक्यमिव । अथ सौदासः, उच्चैस्तरं शिलातलं स्वेनोत्तरीयेण समास्तीर्य, तत्र च बोधिसत्त्वम् आरोप्य, स्वयम् अनास्तरितायां भूमौ उपविश्य, बोधिसत्त्वं महासत्त्वम् उवाच । ब्रूहीदानीं मार्ष । अथ बोधिसत्त्वो गम्भीरेण स्वरेणोवाच—

न सज्जनाद् दूरतरः क्वचिद् भवेत्,
भजेत साधून् विनय-क्रमानुगः ।

स्पृशन्त्ययत्नेन हि तत्समीपगम्,
विसर्पिणस्तद्गुण-पुष्परेणवः ॥

सौदास उवाच। साधु साधु। सुभाषितान्यर्चयता त्वया, साधो, स्थाने खलु नियुक्तोऽर्थः। ततस्ततः। बोधिसत्व उवाच—

रथा नृपाणां मणि-हेमभूषणाः,
व्रजन्ति देहाश्च जरा-विरूपताम्।
सतां तु धर्मं न जराभिवर्तते,
स्थिरानुरागा हि गुणेषु साधवः ॥

अमृतवर्षं खल्विदम्। अहो संतर्पिताः स्मः। ततस्ततः। बोधिसत्व उवाच—

नभश्च दूरे वसुधा-तलाच्च, पारादवारं च महार्णवस्य।
अस्ताचलेन्द्राद् उदयस्ततोऽपि, धर्मः सतां दूरतरेऽसतां च ॥

अथ सौदासः, मधुरा गाथा निशम्य, आनन्दितः प्राह। अहं ते चतुरो वरान् ददामि। तद् वृणीष्व यद् यन्मत्तोऽभिकाङ्क्षसि। अथैनं बोधिसत्वः, सविस्मयबहुमान उवाच। कस्त्वं वरप्रदानस्य। आत्मन्यपि ते प्रभुत्वं नास्ति। परस्मै कं वरं दास्यसि। यद्यहं वदेयम्, वरं देहीति, तव मनः दित्सा-शिथिलं स्यात्। अथ सौदासः किञ्चिद्-व्रीडावनत-वदनो बोधिसत्वमाह। अलमत्रभवतो मामेवं विशङ्कितुम्। प्राणानपि परित्यज्य तान् वरान् अहं दास्यामि। यद् यद् इच्छसि, तद् विस्रब्धं वृणीष्व। बोधिसत्व उवाच। तेन हि—

सत्यव्रतो भव, विसर्जय सत्व-हिंसाम्,
वन्दीकृतं जनमशेषमिमं विमुञ्च ।
अद्या न चैव नरवीर ! मनुष्य-मांसम्,
एतान्, वरानन ! वरांश्चतुरः प्रयच्छ ॥

सौदास उवाच । भवते पूर्वान् त्रीन् वरान् ददामि । चतुर्थं तु वरम् अन्यं वृणीष्व । किं त्वमिदं न जानासि, यथाहं मनुष्य-मांसाद् विरन्तुम् असमर्थोऽस्मि । बोधिसत्त्व उवाच । हन्त, तवैतत् संवृत्तम् ! ननूक्तं मया, कस्त्वं वरप्रदानस्येति । अपि च भोः ! मनुष्य-पिशिताशिताम् अपरित्यजतः, सत्यव्रतत्वम् अहिंसकता च ते कथं स्यात् । ननूक्तं भवता पूर्वम् । प्राणानपि परित्यज्य, एतान् वरान् अहं दास्यामि । तदिदमन्यथा जायते । सौदास उवाच । यस्य हेतोः, राज्यं त्यक्तम् । वने क्लेशो धृतः । धर्मो हतः । कीर्तिः क्षता । तत्कथमहं त्यक्ष्यामि । बोधिसत्व उवाच । अतएव तद् भवांस्त्यक्तुमर्हति । यस्य कृते भवान् भ्रष्टः, धर्मात्, अर्थात्, सुखात्, कीर्तेश्च । तदनर्थायतनं कथं न त्यक्तुमर्हसि । तदलं ते पाप्मानमेव अनुभ्रमितुम् । अवबोद्धुमर्हसि आत्मानम् । सौदासः खल्वत्रभवान् । नरेन्द्र ! चित्तस्य वशेन गन्तुं नार्हसि । प्रियं यद् अहितं, तन्न सेव्यम् । विप्रियमपि सत् कीर्त्यनुपरोधि यत्, तन्मनोज्ञमार्गं भेषजवद् भजस्व ।

अथ सौदासः प्रसादाश्रु-व्याप्तनयनः, गद्गदायमानकण्ठः समभि-सृत्य बोधिसत्त्वम्, पादयोः संपरिष्वज्य उवाच । त्वमिव, कोऽन्यो, मयि पापे, सानुकम्पः स्यात् । त्वं मे गुरुः । अमूनि तव वचांसि मूर्ध्नाहमर्चयामि । मनुष्य-मांसं न भोक्ष्ये । यन्माम्

यथा वदसि तथा करिष्ये।' ये नरा यज्ञनिमित्तम् आहृता मया: तान् बन्धन-खेद-पीडितान्, एहि, सहैव मुञ्चावः। अथ बोधिसत्त्वः, तथेत्यस्मै प्रतिश्रुत्य, यत्र ते नरा तेनावरुद्धाः, तत्रैवाभिजगाम। दृष्ट्वैव च ते नरवीराः सुतसोमम्, "हन्त! मुक्ता वयम्" इति परं हर्षम् उपजग्मुः।

अथैनान् अभिगम्य बोधिसत्त्वः समाश्वासयन्, सौदासस्याद्रोहाय शपथं कारयित्वा, बन्धनाद् विमुच्य, सार्धं सौदासेन तैर्नरवरैश्चानुगम्यमानः, स्वं राज्यम् उपेत्य, यथार्ह-कृत-संस्कारान् तान् नरवरान् सौदासं च, स्वेषु स्वेषु राज्येषु प्रतिष्ठापयामास।

एवं सद्धर्मश्रवणं, दोषापचयाय गुण-समाधानाय च भवति। एवं सज्जनेष्टं पुण्यकीर्त्याकरं सत्यवचनम्। एवं स्वप्राण-सुखैश्वर्य-निरपेक्षाः, सत्यमनुरक्षन्ति सत्पुरुषाः॥

---

## पञ्चत्रिंशः पाठः ॥ ३५ ॥

### (जातकमालायां प्रकीर्णानि धर्म-सम्बन्धीनि सुभाषितानि I–VI)

#### I (करुणा)

परानुग्रह-प्रवृत्तिहेतुः करुणा। सर्वसत्त्वेषु, अकारण-परमवत्सल-स्वभावः सर्वभूतात्मभूतो नरो निर्वाणपदम् आप्नोति। प्रायेण, स्वसौख्यसङ्गेन, परस्य दुःखम् उपेक्ष्यते। अतएव, स्व-सौख्यलाभे, सत्पुरुषस्य प्रवृत्तिर्न भवति। 'कदा स्वगात्रैरपि, परेषां हितं कुर्याम्' इत्यस्य महापुरुषस्य साधुवृत्तिः। 'अन्यदुःखे सति नास्ति मे सौख्यम्' इत्यस्य महात्मनः परमौदार्यम्।

महत्स्वपि स्वदुःखेषु, व्यक्तधैर्याः कृपात्मकाः ।
मृदुनाप्यन्यदुःखेन, कम्पन्ते यत्तदद्भुतम् ॥

अहो, स्वसौख्येषु निरुत्सुका मतिरस्य वीरस्य । यथा हि—

न स्पर्धया नैव यशोऽभिलाषात्,
न स्वर्गलाभात् न च राज्यहेतोः ।
नात्यन्तिकेऽप्यात्मसुखे यथायं,
ममादरोऽन्यत्र परार्थसिद्धेः ॥

II ( दानम् )

पात्रातिशय-प्रतिपादितं दानम् । नेदं स्वसौख्योदय-साधनाय । लोकहितार्थमेव । प्रसन्नचित्तेन दानं ददता परा प्रीतिरुत्पादयितव्या ।

धनस्य निःसारलघोः स सारो,
यद् दीयते लोकहितोन्मुखेन ।
निधानतां याति हि दीयमानम्,
अदीयमानं निधनैकनिष्ठम् ॥

अर्थिनामेव पीडा कारुणिकानां मनो दहति । अत्ययमपि अविगणय्य दित्सन्ति सत्पुरुषाः । प्रत्युपकारं च नेच्छन्ति ।

त्रातुं लोकान् यस्तु जरा-मृत्यु-परीतान्,
अप्यात्मानं दित्सति, कारुण्यवशेन ।
यो नास्वादं वेत्ति सुखानां, परदुःखैः,
कस्तस्यार्थश्चञ्चलया स्यादपि लक्ष्म्या ॥

## III ( धैर्यम् )

श्रूयताम् । स्वभावोऽयं धीरस्य । यदयं स्वयं गुणपथेन व्रजति । परानपि तेन वर्त्मना नयति । अतृष्यमाणः स महात्मा, लोके परार्थबुद्ध्या तिष्ठति । आहारविशेषस्यास्य चिंता न भवति ।

न क्वचिद्दुर्लभा वृत्तिः, संतोष-नियतात्मनाम् ।
कुत्र नाम न विद्यन्ते, तृणपर्ण-जलाशयाः ॥

महाकारुणिकोऽयं परदुःखातुरः स्वसुखं नावेक्षते । आत्म-दुःख-क्षयमात्रेण नास्य संतोषः । लोकहितायैवास्य सर्वोऽप्युद्यमः । उपदिशति धर्मम् । यथा—हिंसा विषवद् वर्ज्या । परद्रव्य-परिग्रहेषु लोभो न कर्तव्यः । वाग् गर्हिताऽपि त्याज्या । मद्यमयं च पापं परिहर्तव्यम् । प्राणिषु, दयायत्तेन, आर्येण भवितव्यम् । धर्मो वै रक्षति धर्मचारिणम् । प्राणात्ययेऽपि साधुजनः स्वधर्म-वृत्तिं न त्यजेत् । नहि शक्यम् अदृश्यमानेन क्वचित् पापमा-चरितुम् । कुतः । रहोऽनुपपत्तेः ।

नास्ति लोके रहो नाम, पापं कर्म प्रकुर्वतः ।
अदृश्यानि हि पश्यन्ति, ननु भूतानि मानुषान् ॥

क्वचिदपि शून्यं न । यत्रान्यं न पश्यति, तत्राप्यशून्यम् । स्वयं पापं कुर्वन् नियमेन वेत्ति । अतोऽयं निश्चयः । न व्याजेन धर्मं चरेत् । बालिशा निमित्तमासाद्य स्वधर्ममार्गं विसृजन्ति । साधवस्तु, परमेऽपि कृच्छ्रे, विक्रियाम् न यान्ति । एवं सत्पुरुषा नाचारवेलां लङ्घयन्ति । तदेवं धैर्यधर्माभ्यासे योगः कार्यः ।

धर्मे ह्युपचितः सम्यग् आवहत्यर्थमुत्तमम् ।
न त्यजेत् जीवितस्यापि हेतोर्धर्ममनुस्मरन् ॥

IV (अक्रोधः)

क्रोध-विनयात्, शत्रून् उपशमयति, वर्धयत्येव तु अन्यथा । क्रोधः शात्रव-नन्दनः । क्रोधः स्वाश्रयबाधनश्च ।

काष्ठाद् यथाग्निः परिदह्यमानाद्, उदेति तस्यैव पराभवाय ।
मिथ्या-विकल्पैः समुदीर्यमाणः, तथा नरस्यात्मवधाय रोषः ॥

इयमपरा च रोषस्य महादोषता—

विस्मृत्य चात्मक्षम-सिद्धिपक्षम्, रोषात् प्रयात्येव तदुत्पथेन ।
निहीयते येन यशोऽर्थसिद्ध्या, तामिस्र-पक्षेन्दुरिवात्म-लक्ष्म्या ॥

मरण-व्याधि-दुःखार्ते, लोभ-द्वेष-वशीकृते ।
दग्धे दुश्चरितैः शोच्ये, कः कोपं कर्तुमर्हति ॥

इति क्रोध-विनये यत्नः कार्यः । एवम्, अवैरेण वैराणि शाम्यन्ति । संयमतश्च वैरं न चीयते ।

V (परोपकारः)

नात्मदुःखेन तथा सन्तः संतप्यन्ते, यथापकारिणां कुशल-पक्ष-हान्या ।

असारस्य शरीरस्य, सारो ह्येष मतः सताम् ।
यत्परेषां हितार्थेषु, साधनीक्रियते बुधैः ॥

धिगहो बत दुर्वृत्तम्, अज्ञानम् अतिदारुणम् ।
यत् पातयति दुःखेषु, सुखाशा-कृपणं जगत् ॥

जिघांसुम् अपि, आपद्गतम्, अनुकम्पन्तेमहाकारुणिकाः । नोपेक्षन्ते । परदुःखमेव दुःखं साधूनाम् । साध्विदमुक्तम्—

दयां सत्त्वेषु मन्येऽहं, धर्मं संक्षेपतो नृप !
हिंसा-स्तेय-निवृत्यादिप्रभेदं विविधक्रियम् ॥
धर्मार्थी न त्यजेदस्मात्, दयामिष्टफलोदयाम् ।
सुवृष्टिरिव सस्यानि, गुणान् सा हि प्रसूयते ॥

दयालुर्नोद्वेगं जनयति परेषाम्, उपशमात्,
दयावान् विश्वास्यो भवति जगतां बान्धव इव ।
न संरम्भ-क्षोभः प्रभवति दया-धीर-हृदये,
न कोपाग्निश्चित्ते ज्वलति हि दया-तोय-शिशिरे ॥

VI ( विमर्शः )

विमर्श-मान्द्यात्, पापस्य दुरंतताम् न जानन्ति नराधिपाः । अहो बत !

देहस्यैकस्य नामार्थे, रोगभूतस्य नाशिनः ।
इदं सत्त्वेषु नैर्घृण्यं, धिगहो बत मूढताम् ॥

द्रुमाद् यथामं प्रचिनोति यः फलम्,
स हन्ति बीजं न रसं च विन्दति ।

अधर्म्यमेवं बलिमुद्धरन्नृपः,
च्छिणोति देशं न च तेन नन्दति ॥

साधवस्तु, परहितोदर्कं दुःखमपि, लाभमिव बहु मन्यन्ते ।

आर्ते प्रवृत्तिः साधूनाम्, कृपया न तु लिप्सया ।
ताम् अवैतु परो मा वा, तत्र कोपस्य को विधिः ॥
कृतश्चेद् धर्म इत्येव, कस्तत्रानुशयः पुनः ।
अथ प्रत्युपकारार्थम्, ऋणादानं न तत्कृतम् ॥

---

[ The selections printed below in an adapted from are taken from the Rāmāyaṇa, the epic poem of Vālmiki who lived in the sixth century B. C. We do not expect from Vālmīki the rigid form of grammar fixed by Pāṇini who lived one century later and whose standard of Sanskrit grammar we now follow. ]

## षड्त्रिंशः पाठः ॥ ३६ ॥

### ( रामस्य वनवास-प्रतिज्ञा )

स ददर्शासने रामो, निषण्णं पितरं तु तम् ।
कैकेयी-सहितं दीनं, मुखेन परिशुष्यता ॥ १ ॥

स पितुश्चरणौ पूर्वम्, अभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ, कैकेय्याः सुसमाहितः ॥ २ ॥

कैकेयीमभिवाद्यैवं, रामो वचनमब्रवीत् ।
देवि ! किंनु मयाऽज्ञानाद्, अपराद्धं महीपतेः ॥ ३ ॥

एवमुक्ता तु कैकेयी, राघवेण महात्मना ।
प्रीतचिन्ता प्रहृष्टा च, रामं वचनमब्रवीत् ॥ ४ ॥

राजा न कुपितो राम ! व्यसनं न च किंचन ।
प्रियं त्वामप्रियं वक्तुम्, नास्य वाणी प्रवर्तते ॥ ५ ॥

एष मह्यं वरं दत्वा, त्वदर्थमभिमृश्य च ।
पश्चात् संतप्यते राजा, यथान्यः प्राकृतस्तथा ॥ ६ ॥

यदा त्वभिहितं राज्ञा, राम ! सम्पादयिष्यसि ।
ततोऽहमभिधास्यामि, नह्येष त्वां प्रवक्ष्यति ॥ ७ ॥

एतत्तु वचनं श्रुत्वा, कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्तां देवीं नृप-सन्निधौ ॥ ८ ॥

अहं हि वचनाद्राज्ञः, पतेयमपि पावकम् ।
भक्षयेयं विषं वापि, मज्जेयमपि वा जले ॥ ९ ॥

नियुक्तो गुरुणा पित्रा, नृपेण च हितेन च ।
करिष्ये प्रतिजाने च, रामो द्विर्नाभिभाषते ॥१०॥

तमार्जव-समायुक्तम्, अनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी, वचनं भृशदारुणम् ॥११॥

पुरा देवासुरे युद्धे, पित्रा ते मम राघव !
रक्षितेन वरौ दत्तौ, सशल्येन महारणे ॥१२॥
तत्र मे याचितो राजा, भरतस्याभिषेचनम् ।
गमनं दण्डकारण्ये, तव चाद्यैव राघव ॥१३॥
यदि सत्यप्रतिज्ञं त्वं, पितरं कर्तुमिच्छसि ।
आत्मानं च नरश्रेष्ठ ! मम वाक्यमिदं शृणु ॥१४॥
सप्त सप्त च वर्षाणि, दण्डकारण्यमाश्रितः ।
अभिषेकमिमं त्यक्त्वा, जटा-चीरधरो भव ॥१५॥
भरतः कोशलपुरे, प्रशास्तु वसुधामिमाम् ।
एवं ते पितुरादेशः, कृतो रामो भविष्यति ॥१६॥
एतत् कुरु नरेन्द्रस्य, वचनं रघुनन्दन !
सत्येन महता राम ! तारयस्व नरेश्वरम् ॥१७॥
स तु तद् वचनं श्रुत्वा, कैकेय्या समुदाहृतम् ।
प्रहस्यानन्तरं वाक्यम्, उवाच रघुनन्दनः ॥१८॥
देव्येवमस्तु वत्स्यामि, नव वर्षाणि पञ्च च ।
जटा-चीरधरोऽरण्ये, प्रतिज्ञां पालयन् पितुः ॥१९॥
अहं हि सीतां राज्यं च, प्राणानिष्टान् धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्याम्, भरतायाप्रणोदितः ॥२०॥
किं पुनर्मनुजेन्द्रेण, स्वयं पित्रा प्रणोदितः ।
तव च प्रियकामार्थं, प्रतिज्ञामनुपालयन् ॥२१॥

नाहमर्थपरो देवि ! लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं, केवलं धर्ममास्थितम् ॥२२॥
न ह्यतो धर्मचरणं, किञ्चिदस्ति महत्तरम् ।
श्रूषा, तस्य वा वचनक्रिया ॥२३॥

( —अयोध्याकाण्डे )

---

## सप्तत्रिंशः पाठः ॥ ३७ ॥

रामायणे पम्पासरोवर्णनम्, सुग्रीव-सम्मेलनम् च )

आजगाम ततः पम्पां, लक्ष्मणेन सह प्रभुः ।
समीक्ष्यमाणः पुष्पाढ्यां, सर्वतो विपुलद्रुमाम् ॥ १ ॥
रम्योपवन-संबाधां, रम्य-सम्पीडितोदकाम् ।
स्फटिकोपम-तोयां तां, श्लक्ष्णवालुक-संतताम् ॥ २ ॥
पद्मसौगन्धिकैस्ताम्रां, शुक्लां कुमुदमण्डलैः ।
नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव ॥ ३ ॥
स तां पुष्करिणीं गत्वा, पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितः, सौमित्रिमिदमब्रवीत् ॥ ४ ॥
पश्य रूपाणि सौमित्रे ! वनानां पुष्पशालिनाम् ।
सृजतां पुष्पवर्षाणि, वर्षं तोयमुचामिव ॥ ५ ॥

प्रस्तरेषु च रम्येषु, विविधाः कानन-द्रुमाः ।
वायुवेग-प्रचलिताः, पुष्पैरवकिरन्ति गाम् ॥ ६ ॥
पतितैश्च पतद्भिश्च, पादपस्थैश्च मारुतः ।
कुसुमैः पश्य सौमित्रे ! क्रीडतीव समन्ततः ॥ ७ ॥
मत्त-कोकिलसंनादैर्नर्तयन्निव पादपान् ।
शैलकन्दर-निष्क्रान्तः, प्रगीत इव चानिलः ॥ ८ ॥
सुपुष्पितांस्तु पश्यैतान्, कर्णिकारान् समन्ततः ।
हाटक-प्रतिसंच्छन्नान्, नरान् पीताम्बरानिव ॥ ६ ॥

(—आरण्यकाण्डे)

एवं तत्र विहरन्तौ रामलक्ष्मणौ सुग्रीवोऽपश्यत् । प्रीत्या च राघवमुवाच । "यदि मे सख्यं रोचते, एष मे बाहुः प्रसारितः । पाणिना पाणिर्गृह्यताम् । त्वं मे वयस्योऽसि ।" पुनरब्रवीत् सुग्रीवः । सीता राक्षसेनापहृता, अत्र न संशयः । राक्षसेनापह्रियमाणा सा मया दृष्टा ।

क्रोशन्ती राम रामेति, लक्ष्मणेति च विस्वरम् ।
स्फुरन्ती रावणस्याङ्के, पन्नगेन्द्रवधूर्यथा ॥ १० ॥
उत्तरीयं तया त्यक्तं, शुभान्याभरणानि च ।
तान्यस्माभिर्गृहीतानि, निहितानि च राघव ॥ ११ ॥

तानि प्रत्यभिज्ञातुमर्हति भवान् ।

उत्तरीयं गृहीत्वा तु स तान्याभरणानि च ।
इदं पश्येति रामाय, दर्शयामास वानरः ॥ १२ ॥

रामश्च,

ततो गृहीत्वा वासस्तु, शुभान्याभरणानि च ।
अभवद् बाष्पसंरुद्धो, नीहारेणेव चन्द्रमाः ॥ १३ ॥

अथ लक्ष्मणमब्रवीत्—

पश्य लक्ष्मण ! वैदेह्या सन्त्यक्तं ह्रियमाणया ।
उत्तरीयमिदं भूमौ शरीराद् भूषणानि च ॥ १४ ॥
शाद्वलिन्यां ध्रुवं भूम्यां, सीतया ह्रियमाणया ।
उत्सृष्टं भूषणमिदं, तथारूपं हि दृश्यते ॥ १५ ॥
एवमुक्तस्तु रामेण, लक्ष्मणो वाक्यमब्रवीत् ॥

नाहं जानामि केयूरे, नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि, नित्यं पादाभिवन्दनात् ॥ १६ ॥

(—किष्किन्धाकाण्डे)

लक्ष्मणेन प्रतिपादितोऽयं शिष्टाचारः सर्वैर्ब्रह्मचारिभिः सदानुकरणीयः ॥

## अष्टात्रिंशः पाठः ॥ ३८ ॥

( रामायणे वालि-वधः )

राघवेण महाबाणो, वालि-वक्षसि पातितः ।
ततस्तेन महातेजा, वीर्ययुक्तः कपीश्वरः ॥
वेगेनाभिहतो वाली, निपपात महीतले ॥ १ ॥

तं दृष्ट्वा राघवं वाली, लक्ष्मणं च महाबलम् ।
अब्रवीत् परुषं वाक्यं, प्रश्रितं धर्मसंहितम् ॥ २ ॥

पराङ्मुख-वधं कृत्वा, कोऽत्र प्राप्तस्त्वया गुणः ।
यदहं युद्धसंरब्धस्त्वत्कृते निधनं गतः ॥ ३ ॥

युक्तं यत् प्राप्नुयाद् राज्यं, सुग्रीवः स्वर्गते मयि ।
अयुक्तं यदधर्मेण, त्वयाऽहं निहतो रणे ॥ ४ ॥

आधिक्षिप्तस्तदा रामः, पश्चाद् वालिनमब्रवीत् ।
अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ५ ॥

इक्ष्वाकूणामियं भूमिः, सशैल-वन-कानना ।
मृग-पक्षि-मनुष्याणां, निग्रहानुग्रहेष्वपि ॥ ६ ॥

तं पालयति धर्मात्मा, भरतः सत्यवानृजुः ।
धर्मकामार्थ-तत्त्वज्ञो, निग्रहानुग्रहे रतः ॥ ७ ॥

तस्य धर्मकृतादेशा, वयमन्ये च पार्थिवाः ।
चरामो वसुधां कृत्स्नां, धर्मसंतानमिच्छवः ॥ ८ ॥

त्वं तु संक्लिष्टधर्मश्च, कर्मणा च विगर्हितः ।
कामतश्च प्रधानश्च, न स्थितो राजवर्त्मनि ॥ ९ ॥

ज्येष्ठो भ्राता पिता वापि, यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया, धर्मे च पथिवर्तिनः ॥१०॥

यवीयानात्मनः पुत्रः, शिष्यश्चापि गुणोदितः ।
पुत्रवत् ते त्रयश्चिन्त्या, धर्मश्चैवात्र कारणम् ॥११॥

अस्य त्वं ध्रियमाणस्य, सुग्रीवस्य महात्मनः ।
भार्यायां वर्तसे कामात्, स्नुषायां पाप-कर्मकृत् ॥१२॥

औरसीं भगिनीं वापि, भार्यां वाऽप्यनुजस्य यः ।
प्रचरेत नरः कामात्, तस्य दण्डो वधः स्मृतः ॥१३॥

राजभिर्धृतदण्डाश्च, कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति, सन्तः सुकृतिनो यथा ॥१४॥

एवमुक्तस्तु रामेण, वाली प्रव्यथितो भृशम् ।
न दोषं राघवे दध्यौ, धर्मेऽधिगतनिश्चयः ॥१५॥

( —किष्किन्धाकाण्डे )

[ The Māhabhārata which records the deeds of ancient Indian chivalry is the greatest epic-poem of India. It narrates the battle of Kauravas with the Pāṇḍavas and contains many episodes. Some of the episodes are so beautiful in thought and execution that they are now recognized among the few great achievements of the world's literature. The Māhabhārata is a work of many hands. Its composition does not belong to one period. It extends from 6th or 7th century B. C. to 3rd century A. D. The text in our lessons is presented in a summary-form, and prose is introduced to serve as a variety in narration.

The episode of Aṇī Māṇḍavya, as given below is not only instructive as imparting the lesson of forgiveness but also interesting from the historical point of view, since it bears resemblance to the main incidents of the life of Jesus Christ. It cleary indicates the intercourse of ancient India with the western world. ]

## नवत्रिंशः पाठः ॥ ३९ ॥

### ( महाभारते अणीमाण्डव्योपाख्यानम् ).

बभूव ब्राह्मणः कश्चिन्, 'माण्डव्य' इति विश्रुतः ।
धृतिमान् सर्वधर्मज्ञः, सत्ये तपसि च स्थितः ॥ १ ॥

स आश्रमपदद्वारे, वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महायोगी, तस्थौ मौनव्रतान्वितः ॥ २ ॥
तस्य, कालेन महता, तस्मिंस्तपसि कुर्वतः ।
तमाश्रममनुप्राप्ता, दस्यवो लोप्त्रहारिणः ॥ ३ ॥
अनुसार्यमाणा बहुभिः, रक्षिभिर्भरतर्षभ !
ते तस्यावसथे लोप्त्रं, दस्यवः कुरुसत्तम !
निधाय च भयाल्लीनाः, तत्रैवानागते बले ॥ ४ ॥
तेषु लीनेष्वथो शीघ्रम्, ततस्तद् रक्षिणां बलम् ।
आजगाम, ततोऽपश्यन्, तमृषिं तस्करानुगाः ।
तमपृच्छंस्ततो राजन् ! तथावृत्तं तपोधनम् ॥ ५ ॥
कतमेन पथा याता, दस्यवो द्विजसत्तम !
तेन गच्छेम, हे ब्रह्मन् ! यथा शीघ्रतरं वयम् ॥ ६ ॥
तथा तु रक्षिणां तेषां, ब्रुवतां स तपोधनः ।
न किंचिद् वचनं राजन् ! अब्रवीत् साध्वसाधु वा ॥ ७ ॥
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम् ।
ददृशुस्तत्र लीनान् तांश्चोरान् तद् द्रव्यमेव च ॥ ८ ॥
ततः शङ्का समभवद्, रक्षिणां तं मुनिं प्रति ।
संयम्यैनं ततो राज्ञे, दस्यूंश्चैव न्यवेदयन् ॥ ९ ॥
तं राजा सहितश्चौरैः, अन्वशात, वध्यतामिति ।
स रक्षिभिस्तैरज्ञातः, शूले प्रोतो महातपाः ॥१०॥

ततस्ते शूलमारोप्य, तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपालं, धनान्यादाय तान्यथ ॥११॥

शूलस्थः स तु धर्मात्मा, कालेन महता ततः ।
निराहारोऽपि विप्रर्षिः, मरणं नाभ्यपद्यत ।
धारयामास च प्राणान्, ऋषींश्च समुपानयत् ॥१२॥

शूलाग्रे तप्यमानेन तपस्तेन महात्मना ।
संतापं परमं जग्मुर्मुनयस्तपसान्विताः ॥१३॥

अथ ते मुनयः, तं ब्राह्मणमपृच्छन् । ब्रह्मन्! किं पापं कृतवानसि ? येन शूले महद्दुःखमनुप्राप्तम् ।

ततः स मुनि-शार्दूलः, तानुवाच तपोधनान् ।
दोषतः कं गमिष्यामि, नहि मेऽन्योपराध्यति ॥१४॥

अथ रक्षिणः, बहुतिथेऽहनि, तं तत्र तथा दृष्ट्वा राज्ञे न्यवेदयन् । तेषां वचनं श्रुत्वा, मन्त्रिभिः सह निश्चित्य, राजा शूलस्थम् ऋषिसत्तमम् तदा प्रसादयामास । राजोवाच—

यन्मयापकृतं मोहाद्, अज्ञानाद् ऋषिसत्तम !
प्रसादये त्वां तत्राहं, न मे त्वं क्रोद्धुमर्हसि ॥ १५ ॥

एवमुक्तस्ततो राज्ञा, प्रसादमकरोन्मुनिः ।
कृतप्रसादं राजा तं, ततः समवतारयत् ॥ १६ ॥

शूलाग्रात् चावतीर्य तत् शूलं स निश्चकर्ष। तं शूलं निष्क्रष्टुम् अशक्नुवन्, मूले स चिच्छेद।

स तथान्तर्गतेनैव, शूलेन व्यचरन्मुनिः।
तेनातितपसा लोकान्, विजिग्ये दुर्लभान् परैः।
अणीमाण्डव्य इति च, ततो लोकेषु गीयते ॥ १७ ॥

(—आदिपर्वणि अ० १०७)

---

## चत्वारिंशः पाठः ॥ ४० ॥

[ महाभारते सभापर्वणि पाण्डवानां द्यूतसभा-प्रवेशः। युधिष्ठिरस्य पराजयः। दुःशासनेन द्रौपदीवस्त्राकर्षणम्। श्रीकृष्णस्य कृपया द्रौपद्या रक्षणम्। ]

द्यूतसभायां कितवैर्धनं बलं बन्धुवर्गं सर्वं जितमित्याकर्ण्य, युधिष्ठिरस्तदात्मानं पणं विदधे। आत्मपराजयमपि श्रुत्वा सोऽब्रवीत्। इदानीं द्रौपदी, मम भार्या, मे पणः स्यात्। एवमुक्ते तु वचने, 'धिग् धिग्' इत्येव वृद्धानां गिरः निःसृताः। इतरेषां च सभ्यानां नेत्रेभ्यो जलं प्रापतत्। धृतराष्ट्रस्तु पुनःपुनः पप्रच्छ। किं जितम्। किं जितमिति। शकुनिर्बभाषे जितमिति। अथ दुर्योधनः सहर्षं विदुरमाह। शीघ्रं गच्छ। द्रौपदीमानय। एषा ना दासीभिः सह वेश्म संमार्ष्टु। विदुर उवाच। मन्दोऽसि दुर्योधन! न वेत्सि। मृगस्त्वं व्याघ्रान् पाण्डवान् प्रकोपयसि।

नहि दासीत्वमापन्ना, कृष्णा भवितुमर्हति ।
अनीशेन हि राज्ञैषा, पणे न्यस्तेति मे मतिः ॥१॥

मत्तोऽयं दुर्योधनः । अन्तकालं न बुध्यते । अयं नृशंसवादी न जानाति, द्यूतं महावैरं जनयतीति । तच्छ्रुत्वा दुर्योधनो निजसूतमाह । भीतोऽयं विदुरः । न चास्माकं वृद्धिकामः । त्वं द्रौपदीमानयस्व । एवमुक्तः स सूतः शीघ्रमगच्छत् । द्रौपदीं च प्राह । दुर्योधनस्त्वाम् अजैषीत् । सा त्वं धृतराष्ट्रस्य वेश्म प्रपद्यस्व । द्रौपद्युवाच । कथं त्वमेवं वदसि । को राजपुत्रो भार्यया दीव्येत् । मूढोऽयं राजा । अभून्न कैतवमन्यदस्य । सूत उवाच । नाभूदन्यदस्य कैतवम् । स अदेवीत् । तेन पूर्वं भ्रातरो न्यस्ताः । अथात्मा । अथ त्वं राजपुत्रि । द्रौपद्युवाच—

गच्छ त्वं कितवं गत्वा, सभायां पृच्छ सूतज !
किंनु पूर्वं पराजैषीरात्मानमथवा नु माम् ॥२॥

स सभां गत्वा, द्रौपद्यास्तद् वचो युधिष्ठिरं कथयामास । युधिष्ठिरस्तु तं सूतं न प्रत्युवाच । दुर्योधनो ब्रूते । इहैवागत्य द्रौपदी प्रश्नमेनम् । दुःशासनं चाज्ञापयति । गच्छ । स्वयं प्रगृह्य द्रौपदीमानय । ततः स दुःशासनस्तत्र गत्वा द्रौपदीमाह । एह्येहि । जितासि द्रौपदि ! विमुक्तलज्जा दुर्योधनमिदानीं पश्य । तच्छ्रुत्वा सा द्रौपदी भयार्ता प्र-दुद्राव ।

ततो जवेनाभिससार रोषात्,
दुःशासनस्ताम् अभिगर्जमानः ।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु,
जग्राह केशेषु नरेन्द्र-पत्नीम् ॥३॥

तां च पराकृष्य सभा-समीपम् आनीतवान्। अथ दुःशासनेन व्यवधूयमाना सभामध्ये द्रौपदी तं नृशंसकर्माणमिदमाह। अनार्य! मा विवस्त्रां कुरु। मा विकार्षीः।

धिगस्तु नष्टः खलु भारतानाम्,
धर्मस्तथा क्षत्रविदां च वृत्तम्।
यत्र ह्यतीतां कुरुधर्मवेलां,
प्रेक्षन्ति सर्वे कुरवः सभायाम् ॥४॥

एतच्छ्रुत्वा सभ्यानां महान् नाद उदतिष्ठत। दुःशासनस्तु हसन्नेव वेगेन तामाधूय, 'दासी त्वमसीति' तामुवाच। अथ च तस्या वसनं, बलात्, सभा-मध्ये समाक्षिप्य, व्यपाकर्ष्टुं प्रचक्रमे।

आकृष्यमाणे वसने, द्रौपद्या चिन्तितो हरिः।
गोविन्द! द्वारकावासिन्! कृष्ण! गोपीजनप्रिय ॥५॥
कौरवैः परिभूतां मां, किं न जानासि केशव!
हे नाथ! हे रमानाथ! व्रजनाथार्तिनाशन!
कौरवार्णव-मग्नां माम् उद्धरस्व जनार्दन ॥६॥

द्रौपद्या वचः श्रुत्वा कृष्णः, करुणातिशयात्, गद्गदकण्ठोऽभवत्। शय्यासनं च त्यक्त्वा स कृपालुर्भगवान्, कृपया पद्भ्याम् अभ्यगात्। त्राणाय तस्य, धर्मोऽपि विविधैर्वस्त्रैस्ताम् समावृणोत्।

आकृष्यमाणे वसने, द्रौपद्यास्तु विशांपते!
तद्रूपापरं वस्त्रं प्रादुरासीद् अनेकशः ॥७॥

नानाराग-विरागाणि, वसनान्यथवा प्रभो !
प्रादुर्भवन्ति शतशो, धर्मस्य परिपालनात् ।
ततो हलहलाशब्दस्तत्रासीद् घोरदर्शनः ॥८॥
तदद्भुततमं लोको, वीक्ष्य सर्वे महीभृतः ।
शशंसुर्द्रौपदीं तत्र, कुत्सन्तो धृतराष्ट्रजम् ॥९॥

( —सभापर्वणि अ० ६८ )

---

## एकचत्वारिंशः पाठः ॥ ४१ ॥

### ( महाभारते सावित्र्युपाख्यानम् )

आसीन्मद्रेषु धर्मात्मा, सत्यसन्धो जितेन्द्रियः ।
पार्थिवोऽश्वपतिर्नाम, सर्वभूत-हिते रतः ॥१॥

सावित्रीत्येव नामा तस्य तेजस्विनी कन्यासीत् । तां यौवनावस्थां स्वसुतां वरैरयाच्यमानां दृष्ट्वा स नृपतिर्दुःखितोऽभवत् । राजोवाच—

पुत्रि ! प्रदानकालस्ते, न च कश्चिद् वृणोति माम् ।
स्वयमन्विच्छ भर्तारं, गुणैः सदृशमात्मनः ॥२॥
प्रार्थितः पुरुषो यश्च, स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि, वरय त्वं यथेप्सितम् ॥३॥

सा पितुः पादौ अभिवाद्य, हैमं रथमास्थाय, स्थविरैः सचिवैः सह, राजर्षीणां रम्याणि तपोवनानि जगाम । ततोऽभिगम्य तीर्थानि, पुनः पितुर्वेश्म आजगाम । अथ नारदेन सहासीनं पितरं दृष्ट्वा, सा शिरसा उभयोरेव पादाभिवन्दनं चक्रे । तां दृष्ट्वा नारद उवाच । राजन् ! क्व गताभूदियं ते सुता ? अश्वपतिरुवाच । कार्येण खलु प्रेषितासीत् । अद्यैव चागता । एतस्या भर्तारं शृणु, योऽनया वृतः । पुत्रि ! विस्तरेण ब्रूहि । सावित्र्युवाच । शाल्वेषु 'द्युमत्सेन' इति ख्यातो धर्मात्मा राजासीत् । स पश्चादन्धो जातः । तस्य राज्यमन्यैर्हृतम् । बालवत्सया भार्यया सार्धं स वनं प्रस्थितः ।

तस्य पुत्रः पुरे जातः, संवृद्धश्च तपोवने ।
'सत्यवान्' अनुरूपो मे, भर्तेति मनसा वृतः ॥४॥

नारद उवाच । अहो बत ! महत्पापं सावित्र्या कृतं यदनया सत्यवान् वृतः । सर्वगुणोपेतोऽयम्, परम् एकोऽस्ति महान् दोषः । संवत्सरेण क्षीणायुर्देहत्यागं करिष्यतीति । राजोवाच । एहि सावित्रि ! गच्छ । अन्यं वरय । अस्य तु गुणान् आक्रम्य एको महान् दोषो वर्तते, यत्, सोऽल्पायुर्भविष्यतीति । सावित्र्युवाच । भगवन् ! सकृत् कन्या प्रदीयते ।

दीर्घायुरथवाऽल्पायुः, सगुणो निर्गुणोऽपि वा ।
सकृद् वृतो मया भर्त्ता, न द्वितीयं वृणोम्यहम् ॥५॥

मनसा निश्चितं कृत्वा, ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्, प्रमाणं मे मनस्ततः ॥६॥

नारद उवाच । राजन्! तव दुहितुर्बुद्धिः स्थिरास्ति । नैप
र्मात् अस्माद् वारयितुं शक्या ।

अथ स राजा द्युमत्सेनाश्रमं गत्वा सत्यवन्तं समुद्दिश्य
स्मै राज्ञे सर्वमेव न्यवेदयत् । राजर्षे! सावित्री नाम ममे
कन्या । तां स्नुषार्थे त्वं गृहाण । द्युमत्सेन उवाच । वयं राज्या
च्युताः । वनवासमाश्रिताः । तव सुता तु वनवासम् नार्हति
कथमत्राश्रमे सक्लेशं निवत्स्यति । अश्वपतिरुवाच । सुखं च
दुःखं च मम सुता विजानाति, अहं च । नार्हति भवान् आश
े हन्तुम् । द्युमत्सेन उवाच । त्वया सह मे पूर्वाभिलषित
सम्बन्धः । भ्रष्टराज्योऽहमित्येतद् विचारितं मया । ममाप्ययम
भिप्रायः । अद्यैव स सिद्धो भवतु । अथ तौ नृपौ यथाविधि
समुद्वाहं कारयामासतुः । सोऽश्वपतिः कन्यां दत्त्वा, परमया मुद
युक्तः, स्वमेव भवनं ययौ ।

सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा, भर्तारं मनसेप्सितम् ॥ ७ ॥
गते पितरि, सर्वाणि, सन्न्यस्याभरणानि सा ।
जगृहे वल्कलान्येव, वस्त्रं कापायमेव च ॥ ८ ॥
परिचारैर्गुणैश्चैव, प्रश्रयेण दमेन च ।
सर्वकाम-क्रियाभिश्च, सर्वेषां तुष्टिमादधे ॥ ६ ॥

(—वनपर्वणि अ० २६५

[ It is a most remarkable dialogue between the mother and her son and is so unique in Sanskrit Literature ! It breathes with that spirit of heroism that knows no fear; which reminds us of the epic glory of India.

Lady Vidulā teaches her son to live and die for *honour*. She stands as a prototype of the Rajput ladies of later ages. ]

## द्वाचत्वारिंशः पाठः ॥ ४२ ॥

### ( महाभारते विदुला-तत्पुत्र-संवादः )

अथेमं पुरातनमितिहासमुदाहरन्ति । आसीत् विदुला नाम राजन्या । सा यशस्विनी क्षत्रधर्मरता दान्ता दीर्घदर्शिनी विदुला, सिन्धुराजेन निर्जितं शयानं दीनचेतसम् औरसं पुत्रं जगर्हे । तथा हि । विदुलोवाच—

अनन्दन ! मया जात ! द्विषतां हर्षवर्धन !
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ १ ॥
निर्मन्युश्चाप्यसंख्येयः, पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि, कल्याणाय धुरं वह ॥ २ ॥
मात्मानमवमन्यस्व, मैनमल्पेन पालय ।
मनः कृत्वा सुकल्याणं, मा भैस्त्वं प्रतिसंहर ॥ ३ ॥
उत्तिष्ठ हे कापुरुष ! मा शेष्वैवं पराजितः ।
अमित्रान् नन्दयन् सर्वान्, निर्मानो बन्धु-शोकदः ॥ ४ ॥

सुपूरा वै कुनदिका, सपूरो मूषिकाञ्जलिः ।
सुसंतोषः कापुरुषः, स्वल्पकेनैव तुष्यति ॥ ५ ॥
अप्यहेरारुजन् दंष्ट्राम्, आश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य, जीवितेऽपि पराक्रमेः ॥ ६ ॥
त्वमेवं प्रेतवत् शेषे, कस्माद् वज्रहतो यथा ।
उत्तिष्ठ रे कापुरुष ! मा स्वाप्सीः शत्रुनिर्जितः ॥ ७ ॥
अलातं तिन्दुकस्येव, मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ ८ ॥
कृत्वा मानुष्यकं कर्म, सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति, न चात्मानं विगर्हते ॥ ९ ॥

**अलब्ध्वा यदि वा लब्ध्वा, नानुशोचति पण्डितः ।**
**आनन्तर्यं समाधत्ते, प्राणानां, न धनायते ॥ १० ॥**

उद्भावयस्व वीर्यं वा, तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा, किंनिमित्तं हि जीवसि ॥ ११ ॥
शत्रुर्निमज्जता ग्राह्यो, जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि, न विषीदेत् कथंचन ॥ १२ ॥
यस्य वृत्तं न जल्पन्ति, मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स, नैव स्त्री न पुनः पुमान् ॥ १३ ॥
दाने तपसि सत्ये च, यस्य नोच्चरितं यशः ।
विद्यायामर्थलाभे वा, मातुरुच्चार एव सः ॥ १४ ॥

श्रुतेन तपसा वापि, श्रिया वा विक्रमेण वा ।
जनान् योऽभिभवत्यन्यान्, कर्मणा हि स वै पुमान् ॥१५॥
कलिं पुत्रप्रवादेन, सञ्जय ! त्वामजीजनम् ।
निरमर्षं निरुत्साहं, निर्वीर्यम् अरिनन्दनम् ॥१६॥
मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ।
मा धूमाय ज्वलात्यन्तम्, आक्रम्य जहि शात्रवान् ॥१७॥
ज्वल मूर्धन्यमित्राणां, मुहूर्तमपि वा क्षणम् ।
एतावानेव पुरुषो, यदमर्षी यदक्षमी ॥१८॥
क्षमावान् निरमर्षश्च, नैव स्त्री न पुनः पुमान् ।
सन्तोषो वै श्रियं हन्ति, तथाऽनुक्रोश एव च ॥१९॥
आयसं हृदयं कृत्वा, मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्, तस्मात्पुरुष उच्यते ।
तमाहुर्व्यर्थनामानं, स्त्रीवद् य इह जीवति ॥२०॥

पुत्र उवाच—

किन्नु ते मामपश्यन्त्याः, पृथिव्या अपि सर्वया ।
किमाभरण-कृत्येन, किं भोगैर्जीवितेन वा ॥२१॥

मातोवाच—

किमद्यकानां ये लोका, द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः, सुहृदस्तान् व्रजन्तु नः ॥२२॥
भृत्यैर्विहीयमानानां, परपिण्डोपजीविनाम् ।

कृपणानामसत्वानां, मा वृत्तिमनुवर्तताम् ॥ २३ ॥

यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य, साधु तस्येह जीवितम् ॥ २४ ॥

यमाजीवन्ति पुरुषं, सर्वभूतानि सञ्जय !
पक्कं द्रुममिवासाद्य, तस्य जीवितमर्थवत् ॥ २५ ॥

स्वबाहु-बलमाश्रित्य, योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं, परत्र च शुभां गतिम् ॥ २६ ॥

यो हि तेजो यथाशक्ति, न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकांक्षी, स्तेन इत्येव तं विदुः ॥ २७ ॥

अहं महाकुले जाता, ह्रदात् ह्रदमिवागता ।
ईश्वरी सर्वकल्याणी, भर्त्रा परमपूजिता ॥ २८ ॥

यदः मां चैव भार्यां च, द्रष्टासि भृशदुर्बलाम् ।
न तदा जीवितेनार्थो, भविता तव सञ्जय ! ॥ २९ ॥

यदि कृत्यं न पश्यामि, तवाद्याहं यथा पुरा ।
श्लाघनीयं यशस्यं च, का शान्तिर्हृदयस्य मे ॥ ३० ॥

वयमाश्रयणीयाः स्म, न श्रोतारः परस्य च ।
साऽन्यमासाद्य जीवन्ती, परित्यक्ष्यामि जीवितम् ।
दारिद्र्यमिति यत्प्रोक्तं, पर्यायमरणं हि तत् ॥ ३१ ॥

अपारे भव नः पारम्, अप्लवे भव नः प्लवः ।

अकुर्वन्तो हि कर्माणि, कुर्वन्तो निन्दितानि च।
सुखं नैवेह नामुत्र, लभन्ते पुरुषाधमाः ॥३८॥

युद्धाय क्षत्रियः सृष्टः, सञ्जयेह जयाय च।
जयन् वा वध्यमानो वा, प्राप्नोतीन्द्रसलोकताम् ॥३९॥

पुत्र उवाच। मातः! इयं मतिस्त्वया न वाच्या। विशेषतः पुत्रे। हितत्वेन कारुण्यं पश्य। मातोवाच। अत्रैव ते हितम्, यशःशरीरलाभे। कारुण्यादेवाहं ब्रवीमि। पुत्र उवाच। असहायस्य कुतः सिद्धिः। एताम् दारुणामवस्थां विदित्वा मम चित्तं राज्यान्निवृत्तमस्ति। मातोवाच—

पुत्र! नात्मावमन्तव्यः, पूर्वाभिरसमृद्धिभिः।
अभूत्वा हि भवन्त्यर्था, भूत्वा नश्यन्ति चापरे ॥४०॥
उत्थातव्यं जागृतव्यं, योक्तव्यं भूतिकर्मसु।
भविष्यतीत्येव मनः, कृत्वा सततमव्यथैः ॥४१॥

एतदोजस्विभाषणं श्रुत्वा स्वल्पचेतसोऽपि तस्य तमोऽपागमत्। अथ पुत्र उवाच—

उदके भूरियं धार्या, मर्तव्यं वाऽऽहवे मया।
यस्य मे भवती नेत्री, भविष्यद्-भूति-दर्शिनी ॥४२॥

इत्थं स वाक्यसायकैः प्रणुन्नो यथानुशासनम् तत्सर्वं चकार। पित्र्यं राज्यं च पुनर्लब्धवान्।

जयो नामेतिहासोऽयं, श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं, श्रुत्वा शत्रूंश्च मर्दति ॥४३॥

**नियन्तारमसाधूनां, गोप्तारं धर्मचारिणाम् ।**
**ईदृशं क्षत्रिया सूते, वीरं सत्यपराक्रमम् ॥४४॥**

( —उद्योगपर्वणि अ० १३२ )

---

## त्रयश्चत्वारिंशः पाठः ॥ ४३ ॥

( महाभारते श्रीमद्भगवद्गीतायाम्—I )

अथ व्यवस्थितान्दृष्ट्वा, धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्र-संपाते, धनुरुद्यम्य पाण्डवः ॥ १ ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते !
सेनयोरुभयोर्मध्ये, रथं स्थापय मेऽच्युत ॥ २ ॥
एवमुक्तो हृषीकेशो, गुडाकेशेन भारत !
सेनयोरुभयोर्मध्ये, स्थापयित्वा रथोत्तमम् ॥ ३ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ ! पश्यैतान्, समवेतान् कुरूनिति ॥ ४ ॥
तत्रापश्यत् स्थितान् पार्थः, पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन्, पुत्रान् पौत्रान् सखींस्तथा ॥ ५ ॥

श्वशुरान् सुहृदश्चैव, सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः, सर्वान् बन्धूनवस्थितान् ॥६॥
कृपया परयाऽविष्टो, विषीदन्निदमब्रवीत् ।
दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ॥ ७ ॥
सीदन्ति मम गात्राणि, मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे, रोमहर्षश्च जायते ॥ ८ ॥
अहो बत महत्पापं, कर्तुं व्यवसिता वयम् ।
यद् राज्यसुख-लोभेन, हन्तुं स्वजनमुद्यताः ॥ ९ ॥
तं तथा कृपयाविष्टम्, अश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १० ॥
क्लैव्यं मा स्म गमः पार्थ ! नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदय-दौर्बल्यं, त्यक्त्वोत्तिष्ठ परंतप ॥ ११ ॥
अथ चेत् त्वमिमं धर्म्यं, सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च, हित्वा पापमवाप्स्यसि ॥१२॥
अकीर्तिं चापि भूतानि, कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥१३॥
भयाद्रणादुपरतं, मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो, भूत्वा यास्यसि लाघवम् ॥१४॥
अवाच्यवादांश्च बहून्, वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं, ततो दुःखतरं नु किम् ॥१५॥

हतो वा प्राप्स्यसि स्वर्गं, जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृत-निश्चयः ॥१६॥

सुखदुःखसमे कृत्वा, लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व, नैवं पापमवाप्स्यसि ॥१७॥

---

## चतुश्चत्वारिंशः पाठः ॥ ४४ ॥

( महाभारते श्रीमद्भगवद्गीतायाम्—II )

(*Chap. 2.*—Man never dies.)

श्रीभगवानुवाच—

११-अशोच्यानन्वशोचस्त्वं, प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च, नानुशोचन्ति पण्डिताः ॥ १ ॥
१७-अविनाशि तु तद् विद्धि, येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य, न कश्चित् कर्तुमर्हति ॥ २ ॥
२३-नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो, न शोषयति मारुतः ॥ ३ ॥
३०-देही नित्यमवध्योऽयं, देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि, न त्वं शोचितुमर्हसि ॥ ४ ॥

( Need for self-discipline. )

६०—यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि, हरन्ति प्रसभं मनः ॥ ५ ॥
६१—तानि सर्वाणि संयम्य, युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि, तस्य प्रज्ञा प्रतिष्ठिता ॥ ६ ॥
६२—ध्यायतो विषयान् पुंसः, सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः, कामात् क्रोधोऽभिजायते ॥ ७ ॥
६३—क्रोधाद् भवति संमोहः, सम्मोहात् स्मृति-विभ्रमः ।
स्मृति-भ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ८ ॥

( *Chap. 3.*—Self-discipline, a means to social service which is a condition of happiness in life. )

११—परस्परं भावयन्तः, श्रेयः परमवाप्स्यथ ॥९॥

१३—यज्ञशिष्टाशिनः सन्तो, मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा, ये पचन्त्यात्मकारणात् ॥१०॥

( Disinterested Service, the highest duty of man. )

२५—सक्ताः कर्मण्यविद्वांसो, यथा कुर्वन्ति भारत !
कुर्याद् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोक-सङ्ग्रहम् ॥११॥

( Lust, the enemy of man. )

३७—काम एष क्रोध एष, रजोगुण-समुद्भवः ।
महाशनो महापाप्मा, विद्ध्येनमिह वैरिणम् ॥१२॥

(*Chap. 6.*—Self-confidence and one's own effort required to conquer lust.)

५—उद्धरेदात्मनात्मानं, नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥१३॥

(Lust conquered, the highest victory of man consists in the vision of *oneness* of life.)

३२—आत्मौपम्येन सर्वत्र, समं पश्यति योऽर्जुन !
सुखं वा यदि वा दुःखं, स योगी परमो मतः ॥१४॥

(*Chap. 12.*—The Marks of that victorious man who attains the vision.)

१३—अद्वेष्टा सर्वभूतानां, मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः, समदुःखसुखः क्षमी ॥१५॥

१४—सन्तुष्टः सततं योगी, यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥१६॥

(*Chap. 18.*—The man, now ready for self-realization.

५३—अहङ्कारं बलं दर्पं, कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो, ब्रह्मभूयाय कल्पते ॥१७॥

(Hope and Faith in Lord's promise. The Divine Grace saves Humanity. No cause for grief.)

६६—सर्वधर्मान् परित्यज्य, मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो, मोक्षयिष्यामि मा शुचः ॥१८॥

[After the battle of the Mahābhārata is over, King Yudhiṣṭhira with his wife and the four brothers renounces the world and takes journey to the Himalayas. His wife and brothers, one after another die in the way. Yudhiṣṭhira alone remains alive with his dog following him up. Indra comes to receive Yudhiṣṭhira to take him on to the highest heaven. But Yudhiṣṭhira refuses to go to heaven *alone* and seeks the company of his brothers and wife. He wishes to live with them in hell and likes to enjoy the fellowship of man. Yudhiṣṭhira would not part company, *even with a dog*, for his personal gains in heaven ]

## पञ्चचत्वारिंशः पाठः ॥ ४५ ॥

### ( महाभारते युधिष्ठिर-शक्र-संवादः )

ततः शक्रः पार्थम् रथेनोपययौ। तं चाब्रवीत्। देवरथमेनमारोह। धर्मराजो युधिष्ठिरस्तु स्वभ्रातॄन् पतितान् दृष्ट्वा शोक-संतप्तः शक्रमिदमब्रवीत्—

भ्रातरः पतिता मेऽत्र, गच्छेयुस्ते मया सह।
न विना भ्रातृभिः स्वर्गमीहे गन्तुं सुरेश्वर ॥१॥

सुकुमारी सुखार्हा च, राजपुत्री पुरंदर!
सहास्माभिर्हि सा गच्छेत्, तद् भवाननुमन्यताम् ॥ २ ॥

शक्र उवाच। हे भरतर्षभ ! मा शुचः। कृष्णया सार्धमग्रतस्त्रिदिवंगतान् सर्वान् भ्रातॄन् स्वर्गे त्वं द्रक्ष्यसि। मानुषं देहं निक्षिप्य ते गताः। त्वमनेन शरीरेण स्वर्गं गन्ता। अत्र न संशयः। युधिष्ठिर उवाच—

अयं श्वा, भूतभव्येश ! भक्तो मां नित्यमेव ह।
स गच्छेद्धि मया सार्धम्, आनृशंस्या हि मे मतिः ॥ ३ ॥

शक्र उवाच। राजन् ! श्वानं त्यज। अत्र नृशंस्यं नास्ति। कृत्स्नां श्रियं महतीं सिद्धिं च प्राप्तोऽसि। स्वर्गसुखानि त्वया संप्राप्तानि। अमृतत्वं च प्राप्तवानसि। युधिष्ठिर उवाच—

अनार्यमार्येण सहस्रनेत्र !
शक्यं कर्तुं दुष्करमेतदार्य !
मा मे श्रिया संगमनं तयाऽस्तु,
यस्याः कृते भक्तजनं त्यजेयम् ॥ ४ ॥

शक्र उवाच। धर्मराज ! स्वर्गलोके श्ववतां स्थानं नास्ति। ततो विचार्य क्रियतां कार्यम्। श्वानं त्यज। अत्र नृशंस्यं नास्ति। युधिष्ठिर उवाच। शक्र ! भक्तत्यागमत्यन्तपापमाहुः। तस्मादहं श्वानमेनं स्वसुखार्थं कदापि न त्यक्ष्यामि।

भीतं भक्तं, नान्यदस्तीति चार्तं,
प्राप्तं क्षीणं रक्षणे प्राणलिप्सुम्।
प्राणत्यागादप्यहं नैव मोक्तुम्,
यतेऽहं वै नित्यमेतद् व्रतं मे ॥ ५ ॥

इन्द्र उवाच। श्वाऽस्पर्शनीयः। अस्य त्यागं कुरु। अस्पृश्यानां त्यागादेव देवलोकं प्राप्स्यसि।

त्यक्त्वा भ्रातॄन् दयितां चापि कृष्णां,
प्राप्तो लोकः कर्मणा स्वेन वीर !
श्वाऽयं त्वया न त्यज्यते कथं नु,
त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ ६ ॥

युधिष्ठिर उवाच—

न विद्यते संधिरथापि विग्रहो,
मृतैर्मर्त्यैरिति लोकेषु निष्ठा।
न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो, न जीवताम् ॥ ७ ॥

भीति-प्रदानं शरणागतस्य,
स्त्रियो वधो, ब्राह्मण-स्वापहारः।
मित्रद्रोहस्तानि चत्वारि शक्र !
भक्तत्यागश्चैव समो मतो मे ॥ ८ ॥

धर्मराजस्य तद् वचो निशम्य, इन्द्र उवाच—

अयं श्वा भक्त इत्येवं, त्यक्तो देवरथस्त्वया।
प्राप्तोऽसि, भरतश्रेष्ठ ! दिव्यां गतिमनुत्तमाम् ॥ ९ ॥

ततो देवा युधिष्ठिरं रथमारोप्य स्वैर्विमानैः प्रययुः। युधिष्ठिरो रथमास्थाय शीघ्रमूर्ध्वमाचक्रमे। ततो नारद उवाच।

राजन् ! देवानाम् अमूनि वेश्मानि पश्य । नारदस्य वचनं श्रुत्वा राजाऽब्रवीत्—

शुभं वा यदि वा पापं, भ्रातॄणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि, लोकानन्यान् न कामये ॥१०॥

एतच्छ्रुत्वा शक्र उवाच—

स्थानेऽस्मिन् वस राजेन्द्र ! कर्मभिर्निर्जिते शुभैः ।
किं त्वं मानुष्यकं स्नेहम्, अद्यापि परिकर्षसि ॥११॥

अद्यापि मानुषो भावः, स्पृशति त्वां नराधिप !
स्वर्गोऽयं पश्य देवर्षीन्, सिद्धांश्च त्रिदिवालयान् ॥१२॥

एवं वादिनम् इन्द्रम्, धीमान् युधिष्ठिरः पुनरिदमर्थवद् वचनमब्रवीत्—

तैर्विना नोत्सहे वस्तुम्, इह दैत्यनिवर्हण !
गन्तुमिच्छामि तत्राहम्, यत्र ते भ्रातरो मम ॥१३॥

यत्र सा बृहती श्यामा, बुद्धिसत्त्वगुणान्विता ।
द्रौपदी योषितां श्रेष्ठा, यत्र चैव गता मम ॥१४॥

(—महाप्रस्थानिकपर्वणि स्वर्गारोहणपर्वणि च)

## षड्चत्वारिंशः पाठः ॥ ४६ ॥

### ( महाभारते संकीर्ण-पद्यानि )

**सुखार्थिनः कुतो विद्या, नास्ति विद्यार्थिनः सुखम् ।**
**सुखार्थी वा त्यजेद् विद्यां, विद्यार्थी वा त्यजेत् सुखम् ॥**

त्रीण्येव च सतामाहुः, सन्तः पदमनुत्तमम् ।
न द्रुह्येच्चैव, दद्याच्च, सत्यं चैव सदा वदेत् ॥ २ ॥
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धम्, एतत्सत्पुरुष-व्रतम् ॥ ३ ॥
(Yudhiṣṭhira)

अद्रोहः सर्वभूतेषु, कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च, सतां धर्मः सनातनः ॥ ४ ॥
यदन्येषां हितं न स्याद्, आत्मनः कर्मपौरुषम् ।
अपत्रपेत वा येन, न तत्कुर्यात् कथंचन ॥ ५ ॥
ऊर्ध्वबाहुर्विरौम्येष, न च कश्चिच्छृणोति माम् ।
धर्मादर्थश्च कामश्च, स किमर्थं न सेव्यते ॥ ६ ॥
(Vyāsa)

यस्तु शूद्रो दमे सत्ये, धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये, वृत्तेन हि भवेद् द्विजः ॥ ७ ॥
(Yudhiṣṭhira)

नहीदृशं संवननं, त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु, दानं च मधुरा च वाक् ॥ ८ ॥

कालो वा कारणं राज्ञो, राजा वा काल-कारणम् ।
इति ते संशयो मा भूद्, राजा कालस्य कारणम् ॥ ६ ॥

(Bhisma)

अधर्मः सुमहानेष, यच्छय्या-मरणं गृहे ।
अरण्ये यो विमुञ्चेत, सङ्ग्रामे वा तनुं नरः ।
क्रतूनाहृत्य महतो, महिमानं स गच्छति ॥१०॥

(Draupadi)

शोकस्थानसहस्राणि, भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥११॥

त्यागान्नान्यत्र मर्त्यानां, गुणास्तिष्ठन्ति पूरुषे ।
मृषावादं परिहरेत्, कुर्यात् प्रियमयाचितः ॥१२॥

अतिवादांस्तितिक्षेत, नावमन्येत कंचन ।
क्रोध्यमानः प्रियं ब्रूयाद्, आक्रुष्टः कुशलं वदेत् ॥१३॥

न पापे प्रतिपापः स्यात्, साधुरेव सदा भवेत् ।
आत्मनैव हतः पापो, यः पापं कर्तुमिच्छति ॥१४॥

ये न मानित्वमिच्छन्ति, मानयन्ति च ये परान् ।
ये क्रोधं संनियच्छन्ति, क्रुद्धान् संशमयन्ति च ॥

सर्वभूतदयावन्तः, अहिंसा-निरताः सदा ।
परुषं च न भाषन्ते, ते संतः पुरुषर्षभाः ॥१५-१६ ॥

धर्मात्मनां हि देहोऽयं, न कामार्थाय जायते।
क्लेशाय तपसे चैव, परेषां हितकर्मणे ॥१७॥

यो नात्युक्तः प्राह रूक्षं प्रियं वा,
यो वा हतो न प्रतिहन्ति धैर्यात् ।
पापं च यो नेच्छति तस्य हन्तुः,
तस्येह देवाः स्पृहयन्ति नित्यम् ॥१८॥

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा, ब्रह्म संपद्यते तदा ॥१९॥

(Suka)

यः समुत्पतितं क्रोधं, क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां, स वै पुरुष उच्यते ॥२०॥
क्षमावतामयं लोकः, परश्चैव क्षमावताम् ।
यदा हि क्षमते सर्वं, ब्रह्म संपद्यते तदा ॥२१॥

जीवितं यः स्वयं चेच्छेत्, कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मनि चेच्छेत, तत् परस्यापि चिन्तयेत् ॥२२॥

(The Dharma Sāstra of Manu popularly know as Manu Smriti lays down the standard of morality and a code of living for the people of India. It is one of the most ancient Smritis. But its text has undergone many changes from time to time, and the present text represents the latest stage of its development.)

# सप्तचत्वारिंशः पाठः ॥ ४७ ॥

## ( मानव-धर्मशास्त्रम् )

( *Chap. 1* )

९६—भूतानां प्राणिनः श्रेष्ठाः, प्राणिनां बुद्धि-जीविनः ।
बुद्धिमत्सु नराः श्रेष्ठाः, नरेषु ब्राह्मणाः स्मृताः ॥ १ ॥

९७—ब्राह्मणेषु च विद्वांसो, विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः, कर्तृषु ब्रह्मवेदिनः ॥ २ ॥

( *Chap. 2* )

१२—वेदः स्मृतिः सदाचारः, स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः, साक्षाद् धर्मस्य लक्षणम् ॥३॥

( *Chap. 6* )

९२—धृतिः क्षमा दमोऽस्तेयं, शौचमिन्द्रिय-निग्रहः ।
धीर्विद्या सत्यमक्रोधः, दशकं धर्मलक्षणम् ॥ ४ ॥

८७-ब्रह्मचारी गृहस्थश्च, वानप्रस्थो यतिस्तथा।
एते गृहस्थ-प्रभवाश्चत्वारः पृथगाश्रमाः ॥ ५ ॥

( *Chap. 12* )

८८-वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः।
अहिंसा गुरुसेवा च, निःश्रेयसकरं परम् ॥ ६ ॥

---

## अष्टचत्वारिंशः पाठः ॥ ४८ ॥

( नानाकाव्येषु प्रकीर्ण-पद्यानि )

एकोऽहमसहायोऽहं, कृशोऽहमपरिच्छदः ।
स्वप्नेऽप्येवंविधा चिन्ता, मृगेन्द्रस्य न जायते ॥ ६ ॥

हस्तं हस्तेन संपीड्य, दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गान्यङ्गैरिवाक्रम्य, जयेदादौ स्वकं मनः ॥ ७ ॥

(Upanishad)

उत्साहो बलवानार्य ! नास्त्युत्साहात् परं बलम् ।
सोत्साहस्य हि लोकेषु, न किंचिदपि दुर्लभम् ॥ ८ ॥

(Vālmiki)

काष्ठादग्निर्जायते मथ्यमानात्,
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणाम्,
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ ९ ॥

(Bhāsa)

पुराणमित्येव न साधु सर्वम्,
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते,
मूढः पर-प्रत्यय-नेय-बुद्धिः ॥ १० ॥

(Kālidāsa)

नास्त्यहिंसा-समं दानं, नास्त्यहिंसा-समं तपः ।
यथा हस्तिपदे ह्यन्यत्, पदं सर्वं प्रलीयते ॥ ११ ॥

(Padma Purāṇa)

अकिंचिदपि कुर्वाणः, सौख्यैर्दुःखान्यपोहति ।
तत् तस्य किमपि द्रव्यं, यो हि यस्य प्रियो जनः ॥१२॥
(Bhavabhūti)

...रपरेऽपि स्याद्, उपकारपरः पुमान् ।
आत्मवत् सकलं पश्येत्, सर्वेषु प्रीतिमान् भवेत् ॥१३॥

---

[The lesson on the Purāṇas are condensed and rendered into prose from the original text, care being taken that the original diction, as far as possible, remains in tact.]

## नवचत्वारिंशः पाठः ॥ ४६ ॥

( भागवतपुराणे महापुरुष-लक्षणम् )

अष्टादश-पुराणेषु, व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय, पापाय पर-पीडनम् ॥

एकदा सरस्वत्यास्तटे, ऋषयः सभां चक्रुः । तेषां जिज्ञासा समुत्पन्ना । त्रिषु लोकेषु को महान् इति । तद् ज्ञप्तये ते ब्रह्मसुतं भृगुं प्रेषयामासुः । स ब्रह्मणः सभामभ्यगात् । सत्व-परीक्षया च तस्मै प्रह्वणं स्तोत्रं वा न चक्रे । तस्मै भगवान् चुक्रोध । ततः स कैलासमगमत् । देवो महेश्वरो, तं भ्रातरं, मुदा परिरब्धुं

समारेभे। भृगुरुवाच। नैतदिच्छामि। उत्पथगामी त्वम्। देवश्चुकोप। शूलमुद्यम्य तं हन्तुमारेभे। पार्वती तु तं कुपितं देवं सान्त्वयामास।

अथ स भृगुर्वैकुण्ठं जगाम। तत्र देवं जनार्दनं, श्रिय उत्सङ्गे शयानं, पादेन वक्षसि अताडयत्। ततो लक्ष्म्या सह भगवानुत्थाय, स्वतल्पादवरुह्य च, मुनिं शिरसा ननाम। आह। ब्रह्मन्! ते स्वागतम्। उपविशतु भवानत्रासने। भगवन्तमागतम् अजानतामस्माकं क्षन्तुमर्हति भवान्। तात! अतीव कोमलौ ते चरणौ। इत्युक्त्वा स्वेन पाणिना विप्रचरणौ मर्दन् श्रीजनार्दनः प्राह। भगवन्! पुनीहि मां पादोदकेन। त्वच्चरण-भूतिः सततम् उरसि मे निवत्स्यति। भवत्पादेन हतानि सर्वाणि पापानीति। एवमुक्तो भृगुः संतर्पितः सन् परमया च भक्त्या साश्रुलोचनो बभूव। ऋषि-सभामागत्य च स्वानुभूतम् अशेषेणावर्णयत्।

तन्निशम्याथ मुनयो, विस्मिता मुक्तसंशयाः।
भूयांसं श्रद्दधुर्विष्णुं, यतः शान्तिर्यतोऽभयम्॥

## पञ्चाशः पाठः ॥ ५० ॥

### ( मार्कण्डेयपुराणे मरुत्तोपाख्यानम् )

मरुत्तो नाम विख्यातो राजा बभूव । स राज्यं धर्मतः प्रतिपालयामास । तस्यैवं कुर्वतो राज्यम्, कश्चित् तपस्वी तमभ्येत्य प्राह । तव राज्यं प्रशासतः, वैक्लव्यं पश्यामि । किं न जानासि ? पातालादभ्युपेतैर्भुजगैः सप्त मुनिसुता दष्टाः ।

नूनं प्रमत्तो भोगेषु, सक्तो वा विजितेन्द्रियः ।
चारान्धता यतोऽस्तीयं, दुष्टादुष्टं न वेत्सि यत् ॥ १ ॥

ज्ञायतां भोः ! राज्ञां शरीरग्रहणं महते क्लेशाय, न भोगाय ।

तदेतदवबुध्यस्व, हित्वा भोगान् नरेश्वर !
पालनाय क्षितेः क्लेशमङ्गीकर्तुमिहार्हसि ॥ २ ॥

इति तापस-वाक्यं श्रुत्वा लज्जापरो नृपो धनुर्जगृहे । तस्य कोपात् नागलोकः समन्ततो जज्वाल । भुजङ्गमाः पातालमुत्सृज्य मरुत्त-मातरं शरणं ययुः । सर्वे भयातुराः सप्रणामं सगद्गदमिद प्रोचुः । राज्ञि ! पुत्रो निवार्यताम् । अस्य कोपात्, दह्यते सकलो लोकः । त्वाम् ऋते शरणं नान्यत् । यशस्विनि ! कृपां कुरु । तेषां वचः श्रुत्वा सा साध्वी भर्तारमाह । मरुत्तस्य भयाद् भीता भुजङ्गमा इमे मां शरणमायाताः । एभ्यो मयाऽभयं दत्तम् ।

ये मां शरणमापन्नास्ते त्वां शरणमागताः ।
अपृथग्-धर्मचरणा, याताहं शरणं तव ॥ ३ ॥

तत् त्वं पुत्रं युद्धान्निवारय । राजोवाच । मरुत्तस्य क्रोधो दुर्निवर्त्यः । नागा ऊचुः । राजन् ! शरणागतास्तव वयम् । प्रसादः क्रियताम् । आर्त-परित्राणनिमित्तं क्षत्रस्य शस्त्र-धारणम् । तच्छ्रुत्वा स राजा पत्नीं प्राह । भद्रे ! गत्वाऽहं ब्रवीमि तं तव सुतम् । न त्याज्याः शरणागताः । अथ स राजा मरुत्तं दृष्ट्वा उवाच । अस्त्रमुपसंह्रियताम इति । स गुरोर्वाक्यं निशम्य प्रत्युवाच—

नाहमेषां क्षमिष्यामि, दुष्टानामपराधिनाम् ।
स्वधर्ममुल्लङ्घ्य कथं करिष्यामि वचस्तव ॥ ४ ॥

बहुशोऽपि पित्रा निवार्यमाणः सोऽस्त्रं नोपसंहरते । ततस्तस्य पिता पुनरब्रवीत् । मयैतान् शरणागतान् पन्नगान् हिंसयसे, तस्मात् ते प्रतिक्रियां करिष्यामि । ततस्तेन पित्रा घोरं कालास्त्रमुद्यतम् । पुत्रोऽपि तद् वीक्ष्य उवाच । किं भवान् स्वधर्मचारिणि सुते कालास्त्रं मुञ्चति ?

मया कार्यं महाभाग ! प्रजानां परिपालनम् ।
त्वयेदं क्रियते कस्मात्, मद्वधायास्त्रमुद्यतम् ॥ ५ ॥

पिता प्राह । वयं शरणागत-सन्त्राणं कर्तुं व्यवसिताः । त्वं तस्य व्याघातं कर्ता । मां वा हत्वा दुष्टानुरगान् जहि, त्वां वा हत्वाहम् उरगान् रक्षिष्यामि ।

धिक् तस्य जीवितं पुंसः, शरणार्थिनमागतम् ।
यो नार्त्तमनुगृह्णाति, वैरिपक्षमपि ध्रुवम् ॥ ६ ॥

क्षत्रियोऽहमिमे भीताः, शरणं मामुपागताः ।
अपकर्ता त्वमेवैषां, कथं वध्यो न मे भवान् ॥ ७ ॥

मरुत्त उवाच—

मित्रं वा बान्धवो वापि, पिता वा यदि वा गुरुः ।
प्रजापालन-विघ्नाय यो हन्तव्यः स भूभृता ॥ ८ ॥
सोऽहं ते प्रहरिष्यामि, न क्रोद्धव्यं त्वया पितः !
स्वधर्मः परिपाल्यो मे, न मे क्रोधस्तवोपरि ॥ ६ ॥

ततस्तौ परस्परवधं प्रति निश्चितौ दृष्ट्वा मुनयः, तयोरन्तरे समुत्पत्य तस्थुः । ऊचुश्च । त्वया पितरं प्रति, अस्त्रं न मोक्तव्यम् । त्वयापि पुत्रो न हन्तव्यः । मरुत्त उवाच । मया दुष्टा निहन्तव्याः । सन्तो रक्ष्याः । पिता ब्रूते । शरणागत-सन्त्राणं मया कार्यम् । अपराद्धः सुतो मम, यः शरणागतान् हन्ति । मुनय ऊचुः । इमे भुजङ्गा वदन्ति । तान् विप्रान् सञ्जीवयामः, ये दुष्टपन्नगैर्दष्टाः । तदलं विग्रहेण । उभौ राजवर्यौ प्रसीदताम् । उभौ निर्व्यूढ-प्रतिज्ञौ । उभावपि धर्म-कोविदौ । ततस्ते भुजङ्गमास्तान् विप्रान् विषसंहरणेन संजीवयामासुः ।

पित्रोर्ननाम चरणौ, स ततो जगतीपतिः ।
मरुत्तश्च, स तं प्रीत्या, परिष्वज्येदमब्रवीत् ॥१०॥
मानहा भव शत्रूणां, चिरं पालय मेदिनीम् ।
पुत्रपौत्रैश्च मोदस्व, मा च ते सन्तु विद्विषः ॥११॥

# एकपञ्चाशः पाठः ॥ ५१ ॥

## ( मार्कण्डेयपुराणे विपश्चित्कथा )

विदेह-विषये जनकानां कुले 'विपश्चित्' इति विख्यातो धर्मात्मा राजा बभूव। किंतु तेन किमपि स्वल्पं पापं कृतम्। तेन पापेन स नरकं प्राप्तः। तत्र च पापफलं भुक्तम्। ततो यम-किंकरा एनमूचुः। एतावदेव ते पापम्। नान्यत् किंचिद-वशिष्यते। तदेहि। पुण्यानाम् उपभोगाय स्वर्गं गच्छ। अथ यदा स राजा गन्तुमुद्यतः, ततः सर्वैर्नरकवासिभिरुत्क्रुष्टम्। भो महापुरुष! प्रसादं कुरु। तिष्ठ तावन्मुहूर्तकम्। त्वदङ्गसङ्गी पवनोऽयम् आह्लादयति नो मनांसि। गात्रेभ्यश्च परितापं हरति। पीडामपहन्ति। भो दयां कुरु। तद्वचः श्रुत्वा राजा यमपुरुषं पप्रच्छ। मम सन्निकर्षात् कथमेतेषाम् आह्लादः। यमपुरुष उवाच। महाभाग! तव पुण्यस्य माहात्म्यमेतत्, यदेतेषां पापानां दुःखानि मृदुत्वमागतानि। राजोवाच। यद्येतत्, न स्वर्गं गमि-ष्यामि। यत्सुखम् आर्तजन-निर्वाणदानोत्थम्, तत्सुखं ब्रह्मलोके-ऽपि न प्राप्यते, इति मे मतिः।

यदि मत्सन्निधौ एतान्, यातना न प्रबाधते।
ततो भद्रमुख, अत्राहम्, स्थास्ये स्थाणुरिवाचलः ॥१॥

यमपुरुष उवाच—

एहि राजन्! प्रगच्छामः, निजपुण्य-समर्जितान्।
भुङ्क्ष्व भोगान् अपास्येह, यातनाः पापकर्मणाम् ॥ २ ॥

राजोवाच—

तस्मान्न तावद् यास्मामि, यावदेते सुदुःखिताः ।
मत्सान्निधानात् सुखिनो, भवन्ति नरकौकसः ॥ ३ ॥

**यज्ञ-दान-तपांसीह, परत्र च न भूतये ।**
**भवन्ति तस्य यस्यार्त-परित्राणे न मानसम् ॥४॥**

नरस्य यस्य कठिनं मनो बालातुरादिषु ।
वृद्धेषु च न तं मन्ये मानुषं राक्षसो हि सः ॥ ५ ॥

एतेषां सन्निकर्षात् तु, दुःखं यद् विपुलं महत् ।
एतेषां त्राणदानात्तु, मन्ये स्वर्गसुखात् परम् ॥ ६ ॥

प्राप्स्यन्त्यार्ता यदि सुखम्, बहवो दुःखिते मयि ।
किन्नु प्राप्तं मया न स्यात्, तस्मात् त्वं व्रज मा चिरम् ॥ ७ ॥

यमपुरुष उवाच । एष धर्मः प्राप्तः, स्वर्गं त्वामुपनेतुम् । धर्म उवाच । त्वां स्वर्गं नयामि । गम्यताम् । राजोवाच । धर्म ! अत्र नरके मानवाः पीड्यन्ते । त्राहीति माम् आर्ताः क्रन्दन्ति । अतोऽहं न व्रजामि । धर्म उवाच । कर्मणा नरकप्राप्तिः । एते पापाः स्वकर्मजपापं नरके क्षपयन्तु । पुण्येन कर्मणा स्वर्गस्त्वयाऽपि गन्तव्यः । राजोवाच—

**कथं स्पृहां करिष्यन्ति, सत्सम्पर्केषु मानवाः ।**
**यदि मत्सान्निधावेषाम्, उत्कर्षो नोपजायते ॥ ८ ॥**

तस्माद् यत् सुकृतं किञ्चित्, ममास्ति त्रिदशाधिप !
तेन मुच्यन्तु नरकात्, पापिनो यातनागताः ॥ ९ ॥

धर्म उवाच—

एवमूर्ध्वतरं स्थानं, त्वयावाप्तं महीपते !
एतांश्च नरकात् पश्य, विमुक्तान् पापकारिणः ॥१०॥
ततोऽपतत् पुष्पवृष्टिः, तस्योपरि महीपतेः ।
नरकस्था नराः सर्वे, यातनाभ्यः परिच्युताः ॥११॥

---

## द्वापञ्चाशः पाठः ॥ ५२ ॥

( मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्यानम् )

हरिश्चन्द्रेति राजर्षिः, आसीत् त्रेतायुगे पुरा ।
धर्मात्मा पृथिवीपालः, प्रोल्लसत्कीर्तिरुत्तमः ॥ १ ॥
स कदाचिद् महाबाहुः, अरण्येऽनुसरन् मृगम् ।
शुश्राव शब्दमसकृत्, त्रायस्वेति च योषिताम् ॥ २ ॥
स विहाय मृगं राजा, मा भैषीरित्यभाषत ।
मयि शासति दुर्मेधाः, कोऽयमन्यायवृत्तिमान् ।
कोऽयं बध्नाति वस्त्रान्ते, पावकं पापकृन्नरः ॥ ३ ॥
विश्वामित्रस्ततः क्रुद्धः, श्रुत्वा तन्नृपतेर्वचः ।
ततः स राजा विनयात्, प्रणिपत्याभ्यभाषत ॥ ४ ॥

भगवन् ! एष धर्मो मे, नापराधो मम प्रभो !
न क्रोद्धुमर्हसि मुने ! निजधर्म-रतस्य मे ॥ ५ ॥

विश्वामित्र उवाच—

यदि राजा भवान् सम्यग्, राजधर्ममवेक्षते ।
निर्वेष्टुकामो विप्रोऽहं, दीयतामिष्टदक्षिणा ॥ ६ ॥

हरिश्चन्द्र उवाच—

उच्यतां भगवन् ! यत्ते, दातव्यम् अविशङ्कितम् ।
दत्तमित्येव तद् विद्धि, यद्यपि स्यात् सुदुर्लभम् ॥ ७ ॥

विश्वामित्र उवाच—

राजन् ! प्रतिगृहीतोऽयं, यस्ते दत्तः प्रतिग्रहः ।
प्रयच्छ प्रथमं तावद्, दक्षिणां राजसूयकीम् ॥ ८ ॥

राजोवाच—

ब्रह्मन् ! तामपि दास्यामि, दक्षिणां भवतो ह्यहम् ।
व्रियतां द्विजशार्दूल ! यस्तवेष्टः प्रतिग्रहः ॥ ९ ॥

विश्वामित्र उवाच—

ससागरां धरामेतां, सभूभृद्-ग्राम-पत्तनाम् ।
राज्यं च सकलं वीर ! सर्वमेतत्प्रदीयताम् ॥ १० ॥

स नृपः, तस्यर्षेर्वचनं श्रुत्वा, प्रहृष्टेनैव मनसा कृताञ्जलिस्तथेत्याह । विश्वामित्र उवाच—

यदि राजन्! त्वया दत्ता, मम सर्वा वसुन्धरा।
यत्र मे विषये स्वाम्यं, तस्मान्निष्क्रान्तुमर्हसि ॥११॥

राजा तथेत्युक्त्वा, स्वपत्न्या शैब्यया बालकेनात्मजेन च सार्धम्, गन्तुं प्रचक्रमे। ततः स विश्वामित्रः पन्थानं रुद्ध्वा तं नृपं प्राह। मम दक्षिणाम् राजसूयकीम् अदत्वा क्व यास्यसीति? राजोवाच। भगवन्! राज्यमेतत् ते दत्तम्। अद्य देहत्रयम् ममावशिष्टम्। विश्वामित्र उवाच। तथापि खलु दातव्या। हन्त्यदत्तं प्रतिश्रुतम्। राजोवाच। भगवन्! सांप्रतं नास्ति। कालक्रमेण ते दास्यामि। विश्वामित्र उवाच। किंप्रमाणः कालो मया प्रतीक्ष्यः? शीघ्रमाचक्ष्व। राजोवाच। मासेन ते दास्यामि। साम्प्रतं नास्ति मे धनम्। विश्वामित्र उवाच। गच्छ। गच्छ। स्वधर्ममनुपालय।

अथ राजा पुरान्निर्गच्छति। तस्य भार्या बालकं सुतं गृहीत्वा तमनुयाति। पौराश्च तं तथा गच्छन्तं दृष्ट्वा क्रन्दनं कुर्वन्ति। हा नाथ! हा महाराज! हा स्वामिन्! किं जहासि नः? यत्र त्वं तत्र हि वयम्। तव छायाभूता वयं त्वाम् अनुसरामः। आनृशंस्यं परो धर्म इति। इति पौरवचः श्रुत्वा राजा तेषामेवानुकम्पया मार्गे अतिष्ठत्। विश्वामित्रोऽपि तं दृष्ट्वा समागम्याब्रवीत्। धिक् त्वामनृतं जिह्मभाषिणम्। यो मम राज्यं दत्वा पुनराक्रष्टुमिच्छसि। इत्युक्तः स राजा गच्छामीति ब्रुवन् दयितां शीघ्रमाकर्षन् ययौ। तथापि कौशिकः, तस्य भार्यां श्रमातुरां सहसा दण्डकाष्ठेन ताडयामास। तां तथा ताडितां दृष्ट्वा हरिश्चन्द्रो दुःखार्तः, गच्छामीत्याह। नान्यत् किंचिदिति। तदवलोक्य

कृपालवो विश्वेदेवाः प्राहुः । विश्वामित्रः सुपापोऽयम् । येनायं धर्मात्मा राजा स्वराज्यादवरोपितः ।

अथ स राजा बालपुत्रया शैव्ययानुगतः, वाराणसीं पुरीं पद्भ्यां ययौ । पुरीं प्रविश्य विश्वामित्रमुपस्थितं ददर्श । विश्वामित्र उवाच । पूर्णः स मासः । राजर्षे ! दीयतां मम दक्षिणा । हरिश्चन्द्र उवाच । ब्रह्मन् ! अद्यैव सम्पूर्णो मासः यदेतद् दिनार्धं तिष्ठति, तत् प्रतीक्षस्व । विश्वामित्र उवाच । एवमस्तु । अहं पुनरागमिष्यामि । अद्य चेन्न प्रदास्यसि तव शापं प्रदास्यामि ।

अथ राजाऽचिन्तयत् । कथमस्मै प्रदास्यामि । अकिंचनोऽहम् । किमु प्राणान् विमुञ्चामि ? एवं राजानं व्याकुलं दृष्ट्वा, तस्य पत्नी बाष्पगद्गदया गिरा प्रत्युवाच—

त्यज चिन्तां महाराज ! स्वसत्यमनुपालय ।
श्मशानवद् वर्जनीयो, नरः सत्यबहिष्कृतः ॥१२॥
नातः परतरं धर्मं, वदन्ति पुरुषस्य तु ।
यादृशं पुरुषव्याघ्र ! स्वसत्य-परिपालनम् ॥१३॥

राजन् ! जातमपत्यं मे । सतां पुत्रफलाः स्त्रियः । मां वित्तेन प्रदाय विप्राय दक्षिणां देहि । इत्युक्त्वा सा भृशं रुरोद । राजाऽपि तद्वाक्यमुपश्रुत्य मोहं गतः । संज्ञां च प्रतिलभ्य विलापमकरोत् । भद्रे ! महद् दुःखमिदम् । यत् त्वं मामेवं ब्रवीषि । दुर्वाच्यमेतद्वचनं कथं कर्तुं शक्नोमि । इत्युक्त्वा भूमौ निपपात । महीपतिं भुवि शयानं दृष्ट्वा, राजपत्नी सकरुणमुवाच । पत्न्युवाच ।

हा महाराज ! येन विपुलं धनं विप्राणां पूर्वम् अपवर्जितम्, स एष मे पतिर्भूमौ स्वपिति । हा देव ! किं तवानेन कृतम् यदयमिमां पापां दशां नीतः । इत्युक्त्वा भर्तृदुःखमहाभारेण निपीडिता सापि मूर्छिता निपपात । तौ पितरौ तथा पतितौ दृष्ट्वा शिशुः, अत्यन्तक्षुधाविष्टः प्राह । तात, तात ! ददस्वान्नम् । अम्बाम्ब ! भोजनं दद ।

एतस्मिन्नन्तरे विश्वामित्रो धनं संमार्गितुं पुनः प्राप्तः । राजानं चेदमब्रवीत् । उत्तिष्ठ । उत्तिष्ठ राजेन्द्र ! यदि धर्ममवेक्षसे, दीयतां सा मे दक्षिणा ।

**सत्येनार्कः प्रतपति, सत्ये तिष्ठति मेदिनी ।**
**सत्यं चोक्तं परो धर्मः, स्वर्गः सत्ये प्रतिष्ठितः ॥१४॥**

अथवा किं ममैतेन । अद्य मे दक्षिणां यदि भवान् अदास्यति, ध्रुवं त्वां शप्स्यामि । इत्युक्त्वा स ययौ । राजा भयातुरो बभूव । अस्य भार्या भूयः प्राह । मम वचनं क्रियतामिति । तया पत्न्या चोद्यमानो राजा प्राह । भद्रे ! निर्घृणोऽहम् । एष ते विक्रयं करोमि । एवमुक्त्वा नगरं गत्वा इदं वचनमब्रवीत् । भो भो नागरिकाः ! शृणुत ! दयितां विक्रेतुं प्राप्तोऽहम् नृशंसः । यदि वः कस्यचिद् दास्या कार्यम्, स ब्रवीतु ।

अथ कश्चिद् वृद्धो द्विजः, तत्रागत्याह । अहं क्रेता । ममार्पयस्व मे दासीम् । अस्ति मे वित्तम् । प्रिया च मे गृहकर्म कर्तुं न शक्नोति । अस्मात्, मे प्रयच्छ । इदं वित्तं गृहाण । ततः स विप्रो नृपस्य वल्कलान्ते धनं बद्ध्वा नृपपत्नीमकर्षयत् । आकृष्टां तु मातरं दृष्ट्वा रोहिताश्वो रुरोद । सा ब्रूते । आर्य !

तावन्मां मुञ्च यावदहं शिशुं पश्यामि। अस्य दर्शनं पुनर्दुर्लभम् भविष्यति। एहि वत्स! पश्य मां मातरम् दास्यतां गतम्। ततः स बालः, अम्बेति रुदन् समभ्यधावत्। ततस्तमागतं बालं द्विजः क्रोधादताडयत्। राजपत्न्युवाच। नाथ! प्रसादं कुरु। इमं च बालकं क्रीणीष्व। ब्राह्मण उवाच। गृह्यतां वित्तमेतत्। बालको मे दीयताम्। ततः स विप्रः, तद् वित्तं दत्वा, मात्रा सह बालकमेकस्थमबन्धयत्। स पार्थिवः, तौ नीयमानौ दृष्ट्वा, सुदुःखार्तो विललाप। हा प्रिये! हा वत्स! धिङ् माम्। इमामपि दशां प्राप्तो न मृतोऽस्मि।

ततो विश्वामित्रः प्राप्तः। नृपं च वित्तमयाचत। हरिश्चन्द्रोऽपि तस्मै, तद्धनं समर्पयामास। तद् वित्तमवलोक्य कुपितः कौशिकोऽब्रवीत्। स्तोकमिदं धनम्। किमिमां दक्षिणां मम सदृशीं त्वम् मन्यसे? राजोवाच। भगवन्! कश्चित्कालः प्रतीक्ष्यताम्। अन्यां दास्यामि। साम्प्रतं नास्ति। पत्नी विक्रीता बालकश्चेति। विश्वामित्र उवाच। राजन्! दिवसस्य चतुर्थोऽयं भागः स्थितः, एष एव मे प्रतीक्ष्यः। उत्तरं त्वया न वक्तव्यम्। एवं निष्ठुरं वचस्तं राजानमुक्त्वा कौशिकस्तूर्णं ययौ। विश्वामित्रे गते, राजा स्वविक्रयं विनिश्चित्य प्रोवाच। यो मानवो मां क्रेतुमिच्छति स ब्रवीतु।

अथ कपाल-हस्तः श्वगणाभिवृतः कश्चित् चण्डालस्तत्रागतः। चण्डाल उवाच। अहमर्थी। आत्म-वेतनं शीघ्रं कथय। राजोवाच। कस्त्वम्? चण्डाल उवाच। चण्डालोऽहमिति। हरिश्चन्द्र उवाच। चण्डालदासत्वं नाहमिच्छेयम्। एवं वदतस्तस्य, विश्वामित्रः प्राप्तः। नराधिपं च प्राह।

चण्डालोऽयम् अनल्पं वित्तं ते दातुमुपस्थितः। कस्माद् अशेषा दक्षिणा मह्यं न दीयते? राजोवाच। भगवन्! वित्तशेषेण तवैव प्रेष्यो भवेयम्। विश्वामित्र उवाच। यदि प्रेष्यो मम भवान्, ततो मया चण्डालाय वित्तार्बुदेन दत्तोऽसि। एवमुक्तः श्वपाको विश्वामित्राय तद् द्रव्यं दत्वा, नरेश्वरं च बद्ध्वा, तं निज-पक्कणम् अनयत्। चण्डाल-पक्कणे वसन् स राजाऽचिन्तयत्।

राज्यनाशः सुहृत्त्यागो, भार्या-तनय-विक्रयः।
प्राप्ता चण्डालता चेयम्, अहो दुःख-परम्परा ॥१५॥

अथ किंचित्कालानन्तरं चण्डालेनानुशिष्टो हरिश्चन्द्रः। इह श्मशाने दिवानिशम् तिष्ठ। प्रतिशवं षड्भागं मूल्यं राज्ञे देयम्। त्रयस्तु मम भागाः। द्वौ भागौ तव वेतनम्। एवं चण्डालेन समादिष्टो राजा शव-मन्दिरमागत्य मृतचेलापहारकोऽभवत्। श्मशानं च संप्राप्य स राजाऽचिन्यत्। क्व तद्राज्यं मम? हा शैब्ये! हा पुत्र! विश्वामित्रस्य दोषेण सर्वं गतम्। इत्येवं चिन्तयन् राजा, यथा चण्डालेनोक्तं तथा कुर्वन्, जीवन्नपि योन्यन्तरं गतः। शवानां मूल्यकरणे तस्य कालो व्यतीतः। एवं गतानि द्वादश वर्षाणि।

अथ तस्य भार्या सर्पदष्टं स्वसुतं मृतमादाय तत्राजगाम। तस्या विलापशब्दमाकर्ण्य राजा त्वरितं तत्समीपमागतः। परं, चिरप्रवास-संतप्तां पुनर्जातामिव तां भार्यां नाभ्यजानात्। सापि तं पुरा चारुकेशान्तं भर्तारं जटालकं दृष्ट्वा नाभ्यजानात्। राजपत्न्युवाच। हा वत्स! हा नाथ! घोरं दुःखमापतितम्।

राज्य-नाशः सुहृत्-त्यागो, भार्या-तनय-विक्रयः ।
हरिश्चन्द्रस्य राजर्षेः, किं विधे ! न त्वया कृतम् ॥१६॥

इति श्रुत्वा राजा, दयितां निधनं गतं च पुत्रं प्रत्यभिज्ञाय, दुःख-संतप्तो भृशं रुरोद, मूर्छां चाभिजगाम। सापि तं तामवस्थामुपगतं प्रत्यभिज्ञाय, निश्चेष्टा धरणीतले निपपात ।

अथ चेतः संप्राप्य तौ समं विलेपतुः। पुत्र-शोकम् अपहाय, भर्तुः कण्ठं समाश्लिष्य राजपत्न्युवाच । धिक त्वामत्यकरुणं दैवम्। येनायममरप्रख्यो राजा श्वपाकतां नीतः । राजन् ! स्वप्नोऽयम् तथ्यं वा। तत्कथ्यताम्। मुह्यते मम मनः।

यद्येतदेवं धर्मज्ञ ! नास्ति धर्मे सहायता ।
नास्ति धर्मः कुतः सत्यम्, आर्जवं चानृशंसता ।
यत्र त्वं धर्मपरमः ! स्वराज्यादवरोपितः ॥१७॥

एतच्छ्रुत्वा राजा कथयामास, यथा श्वपाकता प्राप्तेति। सापि सुचिरं रुदित्वा स्वपुत्रमरणं यथावृत्तं न्यवेदयत् । राजोवाच। कृपणौ, पुत्रगर्धिनौ, आवाम् यमस्य भिक्षां याचावहे। तस्मात्, तत्राद्य शीघ्रं व्रजावः, यत्र प्रियपुत्रो गतः। प्रिये ! दीर्घं कालं क्लेशमुपासितुं न रोचये। परन्तु, पश्य मे मन्दभाग्यम्। पराधीनोऽस्मि । नात्मायत्तः । चण्डालदासोऽहम् । चण्डालेन, अननुज्ञातो ज्वलनं न प्रवेक्ष्यामि । कथं प्राणान् विमुञ्चामि ? परायत्तोऽस्मि दुर्गतः। अथवा कथमपि न जीवामि । सुतशरीरेण दीप्यमाने हुताशने निपतिष्यामि। तन्वङ्गि ! मम कुकृतं क्षन्तव्यम्। गच्छ त्वं विप्र-वेश्म। परत्र सङ्गमो भूयात्, पुत्रेण सह च त्वया। इह लोके त्वेतत् कुतो भविष्यति ?

यन्मया हसता किंचिद्, रहस्ये वा शुचिस्मिते !
अश्लीलमुक्त तत्सर्वं, क्षन्तव्यं मम याचतः ॥१८॥
राजपत्नीति गर्वेण, नावज्ञेयः स ते द्विजः ।
सर्वयत्नेन ते तोष्यः, स्वामी दैवतवत्, शुभे ॥१९॥

राजपत्न्युवाच—

अहमप्यत्र राजर्षे ! दीप्यमाने हुताशने ।
दुःखभारासहाऽद्यैव, सह यास्यामि वै त्वया ॥२०॥
सह स्वर्गं च नरकं च, सहैवावां हि भुङ्क्ष्वहे ।
श्रुत्वा राजा तदोवाच, एवमस्तु पतिव्रते ॥२१॥

ततो राजा चितां कृत्वा, स्वकं तनयमारोप्य, भार्यया सहितो बद्धाञ्जलिपुटः, परमात्मानमचिन्तयत् । तस्य चिन्तयमानस्य, सर्वे देवा धर्मं प्रमुखतः कृत्वा, तत्र समाजग्मुः। आगत्य सर्वे प्रोचुः । भो भो राजन् ! विश्वत्रयेण मैत्रीं कर्तुम् यः पुरा न शकितः, सोऽयं विश्वामित्रस्ते मैत्रीमिष्टं चाहर्तुमिच्छति ।

धर्म उवाच—

मा राजन् ! साहसं कार्षीर्धर्मोऽहं त्वामुपागतः ।
तितिक्षा-दम-सत्याद्यैः, स्वगुणैः परितोषितः ॥२२॥

इन्द्र उवाच—

हरिश्चन्द्र महाभाग ! प्राप्तः शक्रोऽस्मि तेऽन्तिकम् ।
त्वया स-भार्या-पुत्रेण, जिता लोकाः सनातनाः ॥२३॥

आरोह त्रिदिवं राजन् ! भार्या-पुत्र-समन्वितः ।
सुदुष्प्राप्यं नरैरन्यैः, जितमात्मीय-कर्मभिः ॥२४॥

ततस्तस्य राज्ञः पुत्रः; इन्द्रस्य प्रभावात् समुत्तस्थौ । राजापि तं सुतं परिष्वज्य परमया मुदायुतो बभूव। इन्द्रो भूयश्चैनमभाषत । महाभाग ! सभार्यः सपुत्रस्त्वं त्रिदिवं समारोह । हरिश्चन्द्र उवाच—

देवराज ! अननुज्ञातः, स्वामिना श्वपचेन वै ।
अगत्वा निष्कृतिं तस्य, नारोक्ष्येऽहं सुरालयम् ॥२५॥

धर्म उवाच—

तवैनं भाविन क्लेशम्, अवगम्यात्म-मायया ।
आत्मा श्वपाकतां नीतो, दर्शितं तच्च चापलम् ॥२६॥

इन्द्र उवाच । तत्स्वर्गमारोह, हरिश्चन्द्र । हरिश्चन्द्र उवाच । देवराज ! नमस्तुभ्यम् । प्रश्रयान्वितोऽहं ब्रवीमि ।

मच्छोक-मग्नमनसः, कोसलानगरे जनाः ।
तिष्ठन्ति,तानपोह्याद्य, कथं यास्याम्यहं दिवम् ॥२७॥
यदि ते सहिताः स्वर्गं मया यान्ति सुरेश्वर !
ततोऽहमपि यास्यामि नरकं वापि तैः सह ॥२८॥

इन्द्र उवाच—

बहूनि पुण्यपापानि, तेषां भिन्नानि वै पृथक् ।
कथं संघात-भोग्यं त्वं, भूयः स्वर्गमवाप्स्यसि ॥२९॥

हरिश्चन्द्र उवाच—

शक्र ! भुङ्क्ते नृपो राज्यं, प्रभावेण, कुटुम्बिनाम् ।
तच्च तेषां प्रभावेण, मया सर्वमनुष्ठितम् ।
उपकर्तॄन् न सन्त्यक्ष्ये, तानहं स्वर्ग-लिप्सया ॥३०॥

तस्माद् यन् मम देवेश ! किंचिदस्ति सुचेष्टितम् ।
दत्तामिष्टमथो जप्तं, सामान्यं तैस्तदस्तु नः ॥३१॥

बहुकालोपभोग्यं हि, फलं यन्मम कर्मणः ।
तदस्तु दिनमप्येकं, तैः समं, त्वत्प्रसादतः ॥३२॥

शक्र उवाच । एवं भविष्यति । ततः सर्वे चातुर्वर्ण्य-समायुतं नगरं गताः । तत्रागत्य शक्रः प्रोवाच—

आगच्छन्तु जनाः शीघ्रं, स्वर्गलोकं सुदुर्लभम् ।
धर्म-प्रसादात् संप्राप्तं, सर्वैर्युष्माभिरेव तु ॥३३॥

ततो विश्वामित्रः प्रीत्या तं नृपम् अयोध्यापुरेऽभ्यषिञ्चत् ।

राज्ञा सह तदा सर्वे, हृष्टपुष्ट-सुहृज्जनाः ।
सपुत्रपौत्रदारास्ते, दिवमारुरुहुर्जनाः ॥३३॥

शक्र उवाच—

हरिश्चन्द्र-समो राजा, नः भूतो न भविष्यति ।
अहो तितिक्षा-माहात्म्यम्, अहो दानफलं महत् ।
यदागतो हरिश्चन्द्रः, पुरीं चेन्द्रत्वमाप्तवान् ॥३४॥

[Bhāsa is a renowned dramatist who lived before Kalidasa, say in the 3rd century A. D. His works, over twelve in number, have been recently discovered. His style of writing is simple and forceful. Three of his dramas are presented here in a summary-form. The drama called Madhyama Vyāyoga illustrates the beautiful example of self-sacrifice in service of others.]

## त्रयःपञ्चाशः पाठः ॥५३॥

### ( भासस्य मध्यम-व्यायोगः )

( ततः प्रविशति सुतत्रय-कलत्र-परिवृतो ब्राह्मणः, पृष्ठतो घटोत्कचश्च )

ब्राह्मणः—भोः को नु खल्वेषः ?

ब्राह्मणी—आर्य ! क एषोऽस्मान् संतापयति ?

घटोत्कचः—भो ब्राह्मण ! तिष्ठ तिष्ठ । न गन्तव्यम्, न गन्तव्यम् ।

ब्राह्मणः—भो भोः पुरुष ! अस्त्यस्माकं मोक्षः ?

घटोत्कचः—मोक्षोऽस्ति, समयतः ।

ब्राह्मणः—कः समयः ?

घटोत्कचः—अस्ति मे तत्रभवती जननी । तयाहमाज्ञप्तः । पुत्र ! ममोपवास-निसर्गार्थम् अस्मिन् वनप्रदेशे कश्चिन् मानुषः प्रतिगृह्य, आनेतव्य इति । ततो मयासादितो भवान् । पुत्रमेकं विसर्जय ।

ब्राह्मणः—हं भो राक्षसापसद ! किमहमब्राह्मणः ?

घटोत्कचः—

यद्यर्थितो द्विजश्रेष्ठ ! पुत्रमेकं न मुञ्चसि ।
सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि ॥ १ ॥

ब्राह्मणः—एष एव मे निश्चयः ।

कृतकृत्यं शरीरं मे, परिणामेन जर्जरम् ।
राक्षसाग्नौ सुतापेक्षी, होष्यामि विधि-संस्कृतम् ॥ २ ॥

ब्राह्मणी—आर्य ! मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेन शरीरेण, आर्यं कुलं च रक्षितुमिच्छामि ।

घटोत्कचः—भवति ! न खलु स्त्रीजनोऽभिमतस्तत्रभवत्या ।

ब्राह्मणः—अनुगमिष्यामि भवन्तम् ।

घटोत्कचः—आः वृद्धस्त्वम्, अपसर ।

प्रथमः पुत्रः—भोस्तात ! ब्रवीमि खलु तावत् किंचित् ।

ब्राह्मणः—ब्रूहि ब्रूहि शीघ्रम् ।

प्रथमः पुत्रः—

मम प्राणैर्गुरुप्राणान्, इच्छामि परिरक्षितुम् ।
रक्षणार्थं कुलस्यास्य, मोक्तुमर्हति मां भवान् ॥ ३ ॥

द्वितीयः पुत्रः—

ज्येष्ठः श्रेष्ठः कुले लोके, पितॄणां च सुसंप्रियः ।
ततोऽहमेव यास्यामि, गुरुवृत्तिमनुस्मरन् ॥ ४॥

तृतीयः पुत्रः—आर्यौ ! मा मैवम् ।

ज्येष्ठो भ्राता पितृसमः, कथितो ब्रह्मवादिभिः ।
ततोऽहं कर्तुमस्म्यर्हो, गुरूणां प्राण-रक्षणम् ॥ ५ ॥

प्रथमः—वत्स ! मा मैवम् ।

आपदं हि पिता प्राप्तो, ज्येष्ठपुत्रेण तार्यते ।
ततोऽहमेव यास्यामि, गुरूणां, प्राणरक्षणात् ॥ ६ ॥

ब्राह्मणः—ज्येष्ठमिष्टतमम् न शक्नोमि परित्यक्तुम् ।

ब्राह्मणी—यथाऽर्यो ज्येष्ठमिच्छति तथाहमपि कनिष्ठमिच्छामि ।

द्वितीयः– पित्रोरनिष्टः कस्येदानीं प्रियः ?

घटोत्कचः—अहं प्रीतोऽस्मि । शीघ्रमागच्छ ।

द्वितीयः—

धन्योऽस्मि यद् गुरुप्राणाः, स्वैः प्राणैः परिरक्षिताः ।
बन्धुस्नेहाद्धि महतः, काल-स्नेहस्तु दुर्लभः ॥७॥

घटोत्कचः—अहो ! स्वजनवात्सल्यमस्य ब्राह्मणवटोः ।

द्वितीयः—भोस्तात ! अभिवादये ।

ब्राह्मणः—एह्येहि पुत्र ! ब्रह्मलोकमवाप्नुहि ।

द्वितीयः—अनुगृहीतोऽस्मि । अम्ब ! अभिवादये ।

ब्राह्मणी—जात ! चिरं जीव ।

द्वितीयः—अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

प्रथमः—एह्येहि वत्स ! परिष्वजस्व गाढं माम् ।

द्वितीयः—अनुगृहीतोऽस्मि ।

तृतीयः—आर्य ! अभिवादये ।

द्वितीयः—स्वस्ति ।

तृतीयः—अनुगृहीतोऽस्मि ।

द्वितीयः—भोः पुरुष ! किंचित् ब्रवीमि ।

घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

द्वितीयः—एतस्मिन् वनान्तरे जलाशय इव दृश्यते, तत्र मे प्रकल्पित-परलोकस्य पिपासा-प्रतीकारं करिष्यामि ।

घटोत्कचः—दृढव्यवसायिन् ! गम्यताम् । अतिक्रामति मातुराहारकालः । शीघ्रं गच्छ ।

द्वितीयः—भोस्तात ! एष गच्छामि ।

( निष्क्रान्तः )

ब्राह्मणः—हा हा परिमुषिताः स्म । हा पुत्रक ! कथं गत एव ।

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः । भो ब्राह्मण ! आहूयतां तव पुत्रः ।

ब्राह्मणः—आः ! अतिराक्षसं खलु ते वचनम् ।

घटोत्कचः—मर्षयतु भवान् । किंनामा तव पुत्रः ?

ब्राह्मणः—एतदपि न शक्यं श्रोतुम् ।

घटोत्कचः—युक्तं भोः ! ब्राह्मणकुमार ! किंनामा ते भ्राता ?

प्रथमः—तपस्वी मध्यमः ।

घटोत्कचः—अहमेवाह्वयामि । भो मध्यम ! मध्यम ! शीघ्रमागच्छ ।

( ततः प्रविशति भीमसेनः )

भीमः—भोः ! प्राप्तोऽस्मि ।

घटोत्कचः—किं भवानपि मध्यमः ?

भीमः—न तावदपरः ।

मध्यमः—( उपगम्य ) भोः पुरुष ! प्राप्तोऽस्मि ।

घटोत्कचः—प्राप्तवानिदानीं खल्वसि मध्यमः । मध्यम ! इत इतः ।

ब्राह्मणः—( भीमसेनमुपगम्य ) भो मध्यम ! परित्रायस्व ब्राह्मण-कुलम् ।

भीमः— न भेतव्यम् । न भेतव्यम् । मध्यमोऽहमभिवादये ।

ब्राह्मणः—वायुरिव दीर्घायुर्भव ।

भीमः—अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ?

ब्राह्मणः—श्रूयताम् । अहं खलु केशवदासो नाम ब्राह्मणः । उत्तरस्यां दिशि मम मातुलो यज्ञबन्धुर्नामास्ति । तस्य पुत्रोपनयनार्थं सकलत्रोऽस्मि प्रस्थितः ।

भीमः—अरिष्टोऽस्तु पन्थाः । ततस्ततः ।

ब्राह्मणः—ततः ससुतपरिजनं मामेष राक्षसो हन्तुकामोऽभ्युपैति ।

भीमः—एवम् अनेन, ब्राह्मणजनस्य मार्गविघ्नः कृतः । भवतु । निग्रहिष्यामि तावदेनम् । भोः पुरुष ! तिष्ठ तिष्ठ ।

घटोत्कचः—एष स्थितोऽस्मि ।

भीमः—किमर्थं ब्राह्मणजनमपराध्यसि ? मुच्यतां द्विजसत्तमः ।

घटोत्कचः—न मुच्यते ।

मुच्यतामिति विस्रब्धं, ब्रवीति यदि मे पिता ।
न मुच्यते तथा ह्येष, गृहीतो मातुराज्ञया ॥ ८ ॥

भीमः—( आत्मगतम् ) कथं मातुराज्ञेति ? अहो ! गुरुशुश्रूषुः खल्वयम् तपस्वी । साधूक्तम् । माता किल मनुष्याणां दैवतानां च दैवतम् । ( प्रकाशम् ) भोः पुरुष ! प्रष्टव्यं खलु तावदस्ति ।

घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

भीमः—का नाम भवतो माता ?

घटोत्कचः—श्रूयतां, हिडिम्बा नाम राक्षसी ।

भीमः—( आत्मगतम् ) एवं हिडिम्बायाः पुत्रोऽयम् । ( प्रकाशम् ) भोः पुरुष ! भोः पुरुष ! मुच्यताम् ।

घटोत्कचः—न मुच्यते ।

भीमः—भो ब्राह्मण ! गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

द्वितीयः—मा मा भवानेवम् ।

त्यक्ताः प्रागेव मे प्राणाः, गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो, भवांस्तिष्ठतु भूतले ॥ ६ ॥

भीमः—आर्य ! मा मैवम् । क्षत्रियकुलोत्पन्नोऽहम् । पूज्यतमाः खलु ब्राह्मणाः । तस्माच्छरीरेण ब्राह्मण-शरीरं विनिमातु-मिच्छामि ।

घटोत्कचः—अथ केनायं वारितः ?

भीमः—मया ।

घटोत्कचः—किं त्वया ?

भीमः—अथ किम् !

घटोत्कचः—तेन हि भवानेवागच्छतु । ( उभौ परिक्रामतः ) इह तिष्ठ । त्वदागमनमम्बायै निवेदयामि ।

भीमः—बाढम् । गच्छ ।

घटोत्कचः—( उपसृत्य ) अम्ब ! अयमभिवादये । चिराभिल पितो भवत्या आहारार्थमानीतो मानुषः ।

( प्रविश्य )

हिडिम्बा—जात चिरंजीव ! कीदृशो मानुष आनीतः ? पश्यामि तावदेनम् । किमेष. मानुष आनीतः ?

घटोत्कचः—अम्ब ! कोऽयम् ?

हिडिम्बा—उन्मत्तक ! दैवतं खल्वस्माकम् ।

घटोत्कचः—कः प्रत्ययः ?

हिडिम्बा—अयं प्रत्ययः । जयत्वार्यपुत्र. ।

भीमः—( विलोक्य ) का पुनरियम् ? अये देवी हिडिम्बा !

हिडिम्बा—उन्मत्तक ! अभिवादयस्व पितरम् ।

घटोत्कचः—तात ! अयमभिवादये ।

भीमः—पुत्र ! अतिबलपराक्रमो भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

ब्राह्मणः—एवं भीमसेनपुत्रोऽयं घटोत्कचः ।

भीमः—पुत्र ! अभिवादयस्वात्रभवन्तं केशवदासम् ।

घटोत्कचः—भगवन्नभिवादये ।

ब्राह्मणः—पितृसदृशगुणकीर्तिर्भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

ब्राह्मणः—भो वृकोदर ! रक्षितमस्मत्कुलम् । गच्छाम स्तावत् ।

भीमः—अदूरतोऽस्माकमाश्रमः । तत्र विश्राम्य गम्यताम् ।

ब्राह्मणः—कृतमातिथ्यमनेन जीवित-प्रदानेन । तस्माद् गच्छामस्तावत् ।

भीमः—गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय ।

ब्राह्मणः—बाढम् । प्रथमः कल्पः ।

( सपुत्रत्रय-कलत्रो निष्क्रान्तः केशवदासः )

भीमः—हिडिम्बे ! इतस्तावत् । वत्स घटोत्कच ! इतस्तावत् । तत्रभवन्तं केशवदासम्, आश्रमपदद्वारमात्रमपि संभावयिष्यामः ।

( निष्क्रान्ताः सर्वे )

---

## चतुःपञ्चाशः पाठः ॥ ५४ ॥

### ( भासस्य कर्ण-भारम् )

सूत्रधारः—एवमार्यमिश्रान् विज्ञापयामि । ( परिक्रम्य, कर्णं दत्वा ) अये किन्नु खलु विज्ञापनव्यग्रे शब्द इव श्रूयते ? अङ्ग ! पश्यामि ।

( नेपथ्ये ) भो भो ! निवेद्यतां महाराजाय, अङ्गेश्वराय ।

सूत्रधारः—भवतु । विज्ञातम् ।

संग्रामे तुमुले जाते, कर्णाय कलिताञ्जलिः ।
निवेदयति सम्भ्रान्तो, भृत्यो दुर्योधनाज्ञया ॥१ ॥

( निष्क्रान्तः )

( ततः प्रविशति भटः )

भटः—भो भो ! निवेद्यतां महाराजाय, अङ्गेश्वराय, युद्धकाल उपस्थित इति । (परिक्रम्य, विलोक्य) अये अयमङ्गराजः

समर-परिच्छद-परिवृतः, शल्यराजेन सह स्वभवना-न्निष्क्रम्य, इत एवाभिवर्तते। यावदपसर्पामि।

( निष्क्रान्तः )

( ततः प्रविशति यथानिर्दिष्टः कर्णः शल्यश्च )

कर्णः—शल्यराज ! यत्रासौ अर्जुनस्तत्रैव चोद्यतां मम रथः।

शल्यः—बाढम्।

कर्णः—भोः ! कष्टम्। निरर्थम् अस्त्रं मया शिक्षितम्। भोः शल्यराज ! श्रूयतां ममास्त्रस्य वृत्तान्तः।

शल्यः—ममाप्यस्ति कौतूहलम् एनं वृत्तान्तं श्रोतुम्।

कर्णः—पूर्वमेवाहं जामदग्न्यस्य सकाशं गतवानस्मि।

शल्यः—ततस्ततः।

कर्णः—ततः।

विद्युल्लता-कपिल-तुङ्ग-जटाकलापम्,
उद्यत्प्रभा-वलयिनं परशुं दधानम्।
क्षत्रान्तकं मुनिवरं भृगुवंश-केतुम्,
गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि ॥२॥

शल्यः—ततस्ततः।

कर्णः—ततो जामदग्निना ममाशीर्वचनं दत्वा, पृष्टोऽस्मि। को भवान्, किमर्थमिहागत इति।

शल्यः—ततस्ततः।

कर्णः—ततः। 'भगवन् ! अखिलान्यस्त्राणि, उपशिक्षितुम् इच्छामि', इत्युक्तवानस्मि।

शल्यः—ततस्ततः।

कर्णः—तत उक्तोऽहं भगवता ब्राह्मणेषूपदेशं करिष्यामि, न क्षत्रियाणामिति।

शल्यः—अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम्। ततस्ततः।

कर्णः—ततो 'नाहं क्षत्रिय', इत्यस्त्रोपदेशं ग्रहीतुम् आरब्धं मया।

शल्यः—ततस्ततः।

कर्णः—ततः कतिपयकालातिक्रमे, कदाचित् फल-मूल-समित्-कुश-कुसुमाहरणाय गतवता गुरुणा सहानुगतोऽस्मि।

शल्यः—ततस्ततः।

कर्णः—ततः स गुरुर्वन-भ्रमण-परिश्रमात् मदङ्के निद्रावशमुपगतः।

शल्यः—ततस्ततः।

कर्णः—ततः।

कृन्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वये;
निद्राच्छेद-भयाद् असह्यत गुरोर्धैर्यात् तदा वेदना।
उत्थाय क्षतजाप्लुतः स सहसा रोषानलोद्दीपितो,
बुद्ध्वा मां च शशाप कालविफलान्यस्त्राणि ते सन्त्विति ॥२॥

शल्यः—अहो कष्टमभिहितं तत्रभवता!

कर्णः—परीक्षामहे तावदस्त्रस्य वृत्तान्तम्। ( तथा कृत्वा ) एतान्यस्त्राणि निर्वीर्याणीव लक्ष्यन्ते।

शल्यः—भोः! कष्टं किन्नु खल्विदम्।

कर्णः—शल्यराज! अलमलं विषादेन।

हतोऽपि लभते स्वर्गं, जित्वा तु लभते यशः ।
उभे बहु-मते लोके, नास्ति निष्फलता रणे ॥४॥

अक्षयोऽस्तु गोब्राह्मणानाम् । अक्षयोऽस्तु पतिव्रतानाम् । अक्षयोऽस्तु रणेषु, अपराङ्मुखानां यौधपुरुषाणाम् । अक्षयोऽस्तु मम प्राप्तकालस्य । एष भोः ! प्रसन्नोऽस्मि ! शल्यराज ! यावद् रथमारोहावः ।

शल्यः—बाढम् ।

( उभौ रथारोहणं नाटयतः )

कर्णः—शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः ।
( नेपथ्ये ) भोः कर्ण ! महत्तरां भिक्षां याचे ।

कर्णः—( आकर्ण्य ) अये वीर्यवान् शब्दः । आहूयतां स विप्रः । न न ! अहमेवाह्वयामि । भगवन् ! इत इतः ।
( ततः प्रविशति ब्राह्मणरूपेण शक्रः )

शक्रः—भोः कर्ण ! महत्तरां भिक्षां याचे ।

कर्णः—दृढं प्रीतोऽस्मि । कर्णोऽहं भवन्तमेष नमस्करोमि ।

शक्रः—( आत्मगतम् ) किन्नु खलु मया वक्तव्यम् । यदि दीर्घायुर्भव इति वक्ष्ये, दीर्घायुर्भविष्यति । यदि न वक्ष्ये, मूढ इति मां परिभवति । तस्मादुभयं परिहृत्य, किन्नु खलु वक्ष्यामि । भवतु । दृष्टम् । ( प्रकाशम् ) भोः कर्ण ! सूर्य इव चन्द्र इव, हिमवानिव, सागर इव तिष्ठतु ते यशः ।

कर्णः—भगवन् ! किं न वक्तव्यं दीर्घायुरिति ? अथवा एतदेव शोभनम् । कुतः ।

धर्मो हि यत्नैः पुरुषेण साध्यो, भुजङ्ग-जिह्वा-चपला नृपश्रियः।
तस्मात् प्रजापालनमात्रबुद्ध्या, हतेषु देहेषु, गुणा धरन्ते ॥५॥

भगवन्। किमिच्छसि ? किमहं ददामि ?

शक्रः—महत्तरां भिक्षां याचे।

कर्णः—महत्तरां भिक्षां भवते प्रदास्ये। गोसहस्रं ददामि।

शक्रः—गोसहस्रमिति ! मुहूर्तकं क्षीरं पिबामि। नेच्छामि, कर्ण ! नेच्छामि।

कर्णः—किं नेच्छति भवान् ? इदमपि श्रूयताम्। वाजिनां सहस्रं ते ददामि।

शक्रः—अश्व इति ! मुहूर्तकमारोहामि। नेच्छामि, कर्ण ! नेच्छामि।

कर्णः—किं नेच्छति भवान् ? अन्यदपि श्रूयताम्। वारणानां वृन्दमेतत्ते ददामि।

शक्रः—गज इति ! मुहूर्तकमारोहामि। नेच्छामि, कर्ण ! नेच्छामि।

कर्णः—किं नेच्छति भवान् ? अन्यदपि श्रूयताम्। अपर्याप्तं कनकं ददामि।

शक्रः—गृहीत्वा गच्छामि। (किंचिद् गत्वा) नेच्छामि, कर्ण ! नेच्छामि।

कर्णः—तेन हि जित्वा पृथिवीं ददामि।

शक्रः—पृथिव्या किं करिष्यामि ?

कर्णः—तेन हि मच्छिरो ददामि।

शक्रः—अपि हा ! अपि हा !

कर्णः—न भेतव्यम्, न भेतव्यम्। प्रसीदतु भवान्। अन्यदपि श्रूयताम्।

अङ्गैः सदैव जनितं मम देहरक्षा,
देवासुरैरपि न भेद्यमिदं सहास्त्रैः।
देयं तथापि कवचं सह कुण्डलाभ्याम्,
प्रीत्या यथा भगवते रुचितं यदि स्यात् ॥६॥

शक्रः—( सहर्षम् ) ददातु। ददातु।

कर्णः—( आत्मगतम् ) एष एवास्य कामः। किंतु कृष्णस्योपायः। सोऽपि भवतु। धिगयुक्तमनुशोचितुम्। नास्ति संशयः। ( प्रकाशम् ) गृह्यताम्।

शल्यः—अङ्गराज ! न दातव्यम्, न दातव्यम्।

कर्णः—शल्यराज ! अलमलं वारयितुम्। पश्य।

शिक्षा क्षयं गच्छति कालपर्ययात्,
सुबद्धमूला निपतन्ति पादपाः।
जलं जलस्थानगतं च शुष्यति,
हुतं च दत्तं च तथैव तिष्ठति ॥७॥

तस्माद् गृह्यताम्।

( निकृत्य ददाति )

शक्रः—( गृहीत्वा आत्मगतम् ) हन्त गृहीते एते। पूर्वमेवार्जुनविजयार्थं सर्वदेवैर्यत् समर्थितं तदिदानीं मयानुष्ठितम्। तस्मादहमपि, ऐरावतमारुह्य, अर्जुनकर्णयोर्द्वन्द्वयुद्धं पश्यामि।

( निष्क्रान्तः )

शल्यः—भो अङ्गराज। वञ्चितः खलु भवान्।

कर्णः—केन ?

शल्यः—शक्रेण।

कर्णः—न खलु। शक्रः खलु मया वञ्चितः। कुतः।

अनेक-यज्ञाहुति-तर्पितो द्विजैः,
किरीटिमान् दानवसंघ-मर्दनः।
सुरद्विपास्फालन-कर्कशाङ्गुलिः ,
मया कृतार्थः खलु पाकशासनः ॥ ८ ॥

( प्रविश्य ब्राह्मणरूपेण )

देवदूतः—भोः कर्ण! कवच-कुण्डल-ग्रहणात्, जनित-पश्चात्तापेन पुरंदरेण अनुगृहीतोऽसि। पाण्डवेषु, एकपुरुषवधार्थम्. अमोघमस्त्रं, विमला नाम शक्तिरियं प्रतिगृह्यताम्।

कर्णः—धिग्। दत्तस्य न प्रतिगृह्णामि।

देवदूतः—ननु ब्राह्मणवचनाद् गृह्यताम्।

कर्णः—ब्राह्मणवचनमिति। न मयातिक्रांतं पूर्वम्। कदा लभेय ?

देवदूतः—यदा स्मरसि तदा लभस्व।

कर्णः—बाढम्। अनुगृहीतोऽस्मि। प्रतिनिवर्ततां भवान्।

देवदूतः—बाढम्।

( निष्क्रांतः )

कर्णः—शल्यराज! यावद् रथमारोहावः।

शल्यः—बाढम्।

कर्णः—शल्यराज! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः।

शल्यः—बाढम्।

( भरत-वाक्यम् )

सर्वत्र सम्पदः सन्तु, नश्यन्तु विपदः सदा ।
राजा राजगुणोपेतो, भूमिमेकः प्रशास्तु नः ॥ ६ ॥

( निष्क्रान्तौ )

---

## पञ्चपञ्चाशः पाठः ॥ ५५ ॥

( भासस्य बाल-चरितम् )

सूत्रधारः—अये शब्द इव श्रूयते । अङ्ग । पश्यामि । नारदोऽयं हरिं द्रष्टुमभ्यागतः ।

( ततः प्रविशति नारदः )

नारदः—अये इयमत्रभवती देवकी मायया शिशुत्वमुपागतं नारायणं प्रगृह्य वसुदेवेन सह शनैः स्वगृहान्निष्क्रामति । नमो भगवते ।

नारायणाय नरलोक-परायणाय,
लोकाननाय कमलामललोचनाय ।
रामाय रावण-विरोचन-पातनाय,
वीराय वीर्य-निलयाय नमो वराय ॥ १ ॥

( निष्क्रान्तः )

( ततः प्रविशति बालहस्ता देवकी वसुदेवश्च )

वसुदेवः—देवकि ! अर्धरात्रः खलु वर्तते । प्रसुप्तो मथुरायां

सर्वो जनः। तस्माद् यावन्न कश्चित् पश्यति, तावद् बालं गृहीत्वा, अपक्रामामि।

देवकी—क्व आर्यपुत्रः, इमं नेष्यति ?

वसुदेवः—देवकि ! सत्यं ब्रवीमि। अहमपि न जाने। भवतु। आनय।

देवकी—गृह्णातु आर्यपुत्रः।

वसुदेवः—( गृहीत्वा ) ( देवकीम् ) प्रविश त्वमभ्यन्तरम्।

देवकी—एषा गच्छामि मन्दभागा।

( निष्क्रान्ता )

वसुदेवः—हन्त प्रविष्टा देवकी। यावदपक्रामामि। ( परिक्रम्य ) निष्क्रांतोऽस्मि मथुरायाः। अहो बलवांश्चायमन्धकारः। इयं भगवती यमुना कालवर्षसम्पूर्णा स्थिता। किमिदानीं करिष्ये ? हन्त द्विधाच्छिन्नं जलम् इतः स्थितम् इतः प्रधावति। दत्तो मे भगवत्या मार्गः। ( अवतीर्य ) निष्क्रांतोऽस्मि यमुनायाः।

( ततः प्रविशति नंदगोपः )

वसुदेवः वयस्य नन्दगोप ! अपि भगवतीभ्यो गोभ्यः कुशलम् ?

नन्दगोपः—आम् भर्तः ! कुशलम्।

वसुदेवः—वयस्य ! किमिदानीं प्रच्छाद्यते ?

नन्दगोपः—भर्तः ! नास्ति किंचित्।

वसुदेवः—मम खलु प्राणैः शापितः स्याद् यदि सत्यं न ब्रूयात्।

नन्दगोपः—का गतिः ! शृणोतु भर्ता ! अद्यार्धरात्रेऽस्माकं कुटुम्बिन्या, नहि नहि युष्माकं दास्या यशोदया प्रसूतेयं दारिका तपस्विनी जातमात्रैवापगतप्राणा संवृत्ता। एनां दारिकां गृहीत्वा निर्गतोऽस्मि।

वसुदेवः—हन्त भोः ! न शक्यं लोकस्याधिष्ठानभूतं कृतान्तं वञ्चयितुम्। वयस्य! काष्ठभूतं कलेवरं त्यज्यताम्।

नन्दगोपः—न शक्नोमि भर्तः! न शक्नोमि।

वसुदेवः—ईदृशो लोकधर्मः। त्यज्यताम्।

नन्दगोपः—यद् भर्ता आज्ञापयति। दारिके! दारिके!

(इति रोदिति)

वसुदेवः—वयस्य! अलमलं रुदितेन। उत्तिष्ठ। उत्तिष्ठ।

नन्दगोपः—(तथा कृत्वा उपगम्य) जयतु भर्ता। अनेन दासजनेन किं कर्तव्यम्?

वसुदेवः—वयस्य! ननु त्वमपि जानासि, दुरात्मना कंसेन मम षट् पुत्रा निधनम् उपानीता इति। तत् सप्तमोऽयं दीर्घायुः। गृह्यतामयम्।

नन्दगोपः—बिभेमि भर्तः! बिभेमि। यदि कंसो राजा शृणोति वसुदेवस्य दारको नन्दगोपस्य हस्ते न्यासो निक्षिप्त इति, किं बहुना, गतमेव मे शिरः। (विचिन्त्य) यद् भवतु तद् भवतु। आनयतु भर्ता दारकम्।

दामोदरः—बाढम् । प्रथमः कल्पः ।

. V ( ततः प्रविशति राजा )

राजा—दामोदरमिहोपनीय मल्लेनाद्य घातयामि । ध्रु सेन ! ध्रुवसेन !

भटः—( प्रविश्य ) जयतु महाराजः ।

राजा—किमागतो नंदगोपपुत्रः ?

भटः—श्रोतुमर्हति महाराजः । प्रविशन्नेव दामोदरः ससङ्कर्ष गन्धहस्तिनं व्यापादयामास ।

राजा—( सावेगम् ) गच्छ, यथानिर्दिष्टौ चाणूरमुष्टि प्रवेशय । यावदहमपि प्रासादमारुह्य चाणूरमुष्टि योर्युद्धं पश्यामि ।

भटः—यदाज्ञापयति महाराजः ।

. ( निष्क्रान्तः )

( ततः प्रविशतो ध्रुवसेनेन सह चाणूरमुष्टिकौ )

राजा—ध्रुवसेन ! प्रवेश्येतां गोपदारकौ ।

भटः—यदाज्ञापयति महाराजः ।

( निष्क्रान्तः )

( ततः प्रविशतो दामोदरसङ्कर्षणौ ध्रुवसेनेन सह )

भटः—एष महाराजः । उपसर्पतां भवन्तौ ।

उभौ—आः कस्य महाराजः ?

भटः—सर्वस्य जगतोऽस्माकं च ।

दामोदरः—अद्यप्रभृति न भविष्यति ।

भटः—जयतु महाराजः । एतौ तौ ।

राजा—ध्रुवसेन ! प्रवर्ततां युद्धम् ।

( सर्वे युद्धं कुर्वन्ति )

दामोदरः—( चाणूरं निहत्य ) भग्नास्थिरेष निहतः ।

सङ्कर्षणः—( मुष्टिकं निहत्य ) मयापि निहतोऽयम् ।

दामोदरः—कंसासुरं च यमलोकमहं नयामि । ( प्रासादमारुह्य कंसं शिरसि निगृह्य पातयित्वा ) एष एष दुरात्मा कंसः पतितः ।

गोपालकाः—ही ही गोपालकानां राज्यं संवृत्तम् !

वसुदेवः—( प्रविश्य ) अये !

नन्दन्ति सुरतूर्याणि, वृष्टिः पतति कौसुमी ।
कंसान्तकस्य पूजार्थं, प्रायो देवाः समागताः ॥ १ ॥

( गन्धर्वाप्सरसो गायन्ति )

नारायण ! नमस्तेऽस्तु, प्रणमन्ति च देवताः ।
अनेनासुरनाशेन, मही च परिरक्षिता ॥ २ ॥

( भरत-वाक्यम् )

मां सागरपर्यन्तां, हिमवद्-विन्ध्यकुण्डलाम् ।
हीमेकातपत्राङ्कां, राजसिंहः प्रशास्तु नः ॥ ३ ॥

( निष्क्रान्ताः सर्वे )

—

[Kalidāsa the greatest poet of India lived in the 4th or the 5th century A, D. His powers of poetic imagination are of a very high order and his style of writing is so elegant. :Here is a beautiful description of seasons in his work called the Ritu Sambāra. I have taken liberty to make necessary alterations in the text.]

## षट्पंचाशः पाठः ॥ ५६ ॥

### [ कालिदासस्य ऋतुसंहारे ]

#### I ( ग्रीष्मर्तु-वर्णनम् )

मृगाः प्रचण्डातप-तापिता भृशम्,
तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता,
निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥ १ ॥

रवेर्मयूखैरभितापितो भृशम्,
विदह्यमानः पथि तप्तपांसुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन् मुहुः,
फणी मयूरस्य तले निषीदति ॥ २ ॥

II ( वर्षा-वर्णनम् )

तृषाकुलैश्चातकपक्षिणां कुलैः,
अयाचितास्तोयभरावलम्बिनः ।
प्रयान्ति मन्दं बहुवारिवर्षिणो,
बलाहकाः श्रोत्र-मनोहरस्वनाः ॥ ३ ॥

तृणोद्गमैरुद्गतकोमलाङ्कुरै-
श्चितानि नीलैर्हरिणी-मुखक्षतैः ।
वनानि रम्याणि हरन्ति मानसम्,
विभूषितान्युद्गतपल्लवद्रुमैः ॥ ४ ॥

III ( शरद्-वर्णनम् )

काशैर्मही, शिशिर-दीधितिना रजन्यो,
हंसैर्जलानि सरितां, कुमुदैः सरांसि ।
सप्तच्छदैः कुसुम-भारनतैर्वनान्ताः,
शुक्लीकृतान्युपवनानि च मालतीभिः ॥ ५ ॥

सोन्माद-हंसमिथुनैरुपशोभितानि,
स्वच्छानि फुल्ल-कमलोत्पल-भूषितानि ।
मन्दप्रचार-पवनोद्गत-वीचिमाला-
न्युत्कण्ठयन्ति हृदयं सहसा सरांसि ॥ ६ ॥

IV ( हेमन्त-वर्णनम् )

नवप्रवालोद्गम-पुष्परम्यः, प्रफुल्ललोध्रः परिपक्वशालिः ।
विलीनपद्मः प्रपतत्तुषारो, हेमन्तकालः समुपागतः सखे ।।७।।

प्रभूतशालिप्रसवैश्चितानि, मृगाङ्गना-यूथ-विभूषितानि ।
मनोहरक्रौञ्च-निनादितानि, सीमान्तराण्युत्सुकयन्ति चेतः।।८।।

V ( शिशिर-वर्णनम् )

न चंदनं चन्द्र-मरीचि-शीतलम्,
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला,
जनस्य चित्तं रमयन्ति साम्प्रतम् ।। ९ ।।

निरुद्धवातायन-मन्दिरोदरम्,
हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांसि च शास्त्रचिन्तनम्,
प्रयान्ति कालेऽत्र जनस्य सेव्यताम् ।।१०।।

VI ( वसन्त-वर्णनम् )

द्रुमाः सपुष्पाः सलिलं सपद्मम्,
नभः प्रसन्नं पवनः सुगन्धिः ।

सुखाः प्रदोषा दिवसाश्च रम्याः,
सर्वं सखे ! चारुतरं वसन्ते ॥११॥

नाना-मनोज्ञ-कुसुम-द्रुम-भूषिताग्रान्,
हृष्टान्यपुष्ट-निनदाकुल-सानुदेशान् ।
शैलेयजाल-परिणद्ध-शिलागुहान्तान्,
दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥१२॥

---

## सप्तपञ्चाशः पाठः ॥ ५७ ॥

### ( कालिदासस्य सूक्तयः )

मालविकाग्निमित्रे—(१) पत्तने सति, ग्रामे रत्न-परीक्षा
(२) सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय
(३) मंदोऽप्यमंदतामेति संसर्गेण विपश्चितः (४) किन्तु खलु दर्दुरा व्याहरंतीति देवः पृथिवीं वर्षितुं विस्मरति ।

विक्रमोर्वशीये—(५) अतिस्नेहः खलु कार्यदर्शी (६) छिन्नबंधे मत्स्ये पलायिते, निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति ।

मेघदूते—(७) रिक्तः सर्वो भवति हि लघुः, पूर्णता गौरवाय
(८) आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ।

[Bhartrihari who lived in the seventh century A. D. was a grammarian, a philosopher and a poet too. His famous poetical works are the three Satakas—the Niti, the Śriñgāra and the Vairājña Śataka.]

## एकषष्टः पाठः ॥ ६१ ॥

### ( भर्तृहरेः पद्यानि )

नीतिशतके—

हित्य-संगीतकला-विहीनः,
त्वात् पशुः पुच्छविषाण-हीनः ।
णं न खादन्नपि जीवमान-
द् भागधेयं परमं पशूनाम् ॥ १ ॥

येषां न विद्या न तपो न दानम्,
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता,
मनुष्यरूपेण मृगाश्चरन्ति ॥ २ ॥

ाड्यं धियो हरति सिञ्चति वाचि सत्यम्,
ानोन्नतिं दिशति, पापमपाकरोति ।
ेतः प्रसादयति दिक्षु तनोति कीर्तिम्,
सत्संगतिः कथय किं न करोति पुंसाम् ॥ ३ ॥

विपदि धैर्यमथाभ्युदये क्षमा,
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ,
प्रकृति-सिद्धमिदं हि महात्मनाम् ॥ ४ ॥

भवन्ति नम्रास्तरवः फलोद्गमैः,
नवाम्बुभिर्भूरि-विलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम् ।

तृष्णां छिन्धि भज क्षमां जहि मदम्
पापे रतिं मा कृथाः,
सत्यं ब्रूह्यनुयाहि साधु-पदवीम्
सेवस्व विद्वज्जनम् ।
मान्यान्मानय, विद्विषोऽप्यनुनय
प्रच्छादय स्वान् गुणान्,
कीर्तिं पालय दुःखिते कुरु दयाम्
एतत्सतां लक्षणम् ॥६॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।

अद्यैव वा मरणमस्तु युगान्तरे वा,
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ ७

वैराग्यशतके—

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः॥ ८ ।

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती,
रोगाश्च शत्रवइव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो,
लोकस्तथाऽप्यहितमाचरतीति चित्रम् ॥ ९

चला लक्ष्मीश्चलाः प्राणाः, चलं जीवितयौवनम्।
चलाचले च संसारे, धर्म एको हि निश्चलः ॥१०॥

